# विषयानुक्रमणिका





## चित्रसूची

# THE AUTHOR



श्रीयालधन्वि जग्गु वेङ्कटाचार्याः

यादवाद्रिकुटीरोऽयमाम्नायान्तविशारद ।
जीयाद्वेङ्कटवर्यं श्रीशिष्टार्यतनूभव ॥

अवतार — १-२-१८७४ परमपदम् — १४-८-१९६०

saints and earn felicity of expression in Sanskrit. Shri Jaggu Veṅkaṭāchārya was a great scholar having a number of Sanskrit books to his credit, and the present work is a fine literary specimen of the learned prolific writer.

VARANASI-2
*20th August, 1969*

*S. N. SHASTRI*

॥ श्रीमते रामानुजाय नमः ॥

# उपोद्घातः

विष्णोरव्याजकरुणालब्धभक्तिविरक्तिषु ।
चेतनोज्जीवनार्थेषु प्रणामो दिव्यसूरिषु ॥

श्रियःपतिरवाप्तसमस्तकामः समस्त-कल्याण-गुणगण-मणि-रोहण-गिरिः जगज्जन्मादिकारणं परात्परः परमपुरुषः परब्रह्माभिधानः परमं पदमधितिष्ठन् चेतनोज्जिजीवयिषया सिसृक्षुस्तान् करणकलेबरैः संयोज्य, विधिनिषेधपराणि शास्त्राणि तदुपदेष्टारमाचार्यं च प्रदायार्थपञ्चकज्ञानमुपदिदेश ।

तथापि स्वेच्छाप्रवृत्तिमतो विरुद्धानुष्ठानपरांश्च चेतनान् स्वधर्मे प्रवर्तयितुं नरो नारायणश्च भूत्वावतीर्य शिष्याचार्यधर्मान् स्वयमनुष्ठाय प्रादर्शयत् । पुनश्च तदातदा नैकधावततार तानेतान् सत्पथे प्रवर्तयितुम् । तत्राप्यसाधारणैर्धर्मैरस्य परत्वं विज्ञाय चेतनास्सुदूरं सन्निवृत्ताः । ततश्च मनुष्य-सजातीयोऽजनि रामकृष्णादिना रूपेण । तत्रापि ते तं नैवागणयन् यतोऽसावतिमानुषैः समुद्रतरणादिभिर्व्यापारैर्निहीनैरपि कपिस्नेहादिभिः कदाचित् परत्वमन्यदावरत्वं च स्वस्य प्रकटीचकार ।

एवं सर्वथैव भगवत्प्रवृत्तिप्रतिकूलवृत्तिषु चेतनेषु, स भगवान् सुसूक्ष्मं विचिन्त्य कांश्चन चेतनान् विशेषतोऽभिवीक्ष्य, तानिमान् हुतवहज्वालापञ्ज-रान्तरिव संसारिमध्ये प्रवेश्य, वश्यैरेव गजैर्नूतान् मत्तमतङ्गजानिवैभिरेवैतान् स्वायत्तीकर्तुं प्रायतत ।

## दिव्यसूरीणां महत्वम्

ते तु निर्हेतुकया भगवतः कृपया सन्तीर्णतन्मायाः साक्षात्कृत-यथावस्थिततत्त्वहितपुरुषार्थज्ञानाः, भगवत्पारतन्त्र्यकाष्ठानिष्ठाः नित्यानन्दानुभव-योग्यानपि संसारेषु नितरां क्लिश्यमानांश्चेतनानुद्वीक्ष्य निर्विण्णाः परोपदेशमुखेन

तान् सुपथा प्रवर्त्य, 'पोलिह पोलिह' इति शठकोपसूरिसूक्तिक्रमेण व्रातंव्रातं भगवद्भक्तांस्त्यक्ताभिमानान् व्यधुः । ततो ननन्द भगवान्नितरां निजप्रयत्नसाफल्यात् । एवं 'स्वासाध्ये कर्मणि सिद्धहस्ता इमे' इति किल भगवानेतेषु विशेषतोऽनुरक्तो भवति । अनेकेषु च भगवतोऽवतारेषु यथा दशानां प्राधान्यं तथैवाचार्यावतररूपेष्वेषु दश सूरयः प्रधानतमाः । यतश्चाचार्यावतरस्य विशेषतः पाञ्चरात्रे प्रशंसा कृता ।

एतेषां च तरतमभावः तच्चिह्नैरेव गृहीतुं शक्यते । तथा हि — देहात्माभिमानिनां चेतनवर्गाणां ऋषीणां च पर्वतपरमाण्वोरिव यथा तारतम्यं प्रसिद्धम् ; तथैव ऋषीणा दिव्यसूरीणां च तादृशमेव तारतम्यं सिद्धम् । दिव्यसूरिष्वपि भट्टनाथस्य वैशेष्यं निश्चितम् । यतोऽयमितरसूरिवत् मोक्षमपि परमपुरुषार्थं न प्रार्थयामास । किन्तु — भगवन्! कलिकलुषेऽसिन् लोके मद्विलोकनायागतस्य तव को वानर्थः समापतेदिति शङ्कितः 'शतञ्जीव' इति भगवतो मङ्गलमाशासामास ।

एवं भट्टनाथस्य गोदायाश्च तारतम्यं वरीवर्ति । यतो हि भगवान् सुप्तं चेतनजातमुत्थाप्य स्वमपि प्रदर्शयति । इयन्तु गोदा स्वयं भगवन्तम् उत्थाप्य 'तिरुप्पावै' नामकप्रबन्धमुखेन स्वावस्थां तस्मा एव निवेदयामास । किञ्च, भगवद्भक्तिकार्यभूतेषु नायिकादिभावेषु दिव्यसूरीणा नायिकातादात्म्याद्यनुसन्धानञ्च स्वसहजपुंस्त्वेन सह विरुद्धं भासत इति न सरसतरम् । अस्यास्तु स्वतः प्रेमप्रधानसहजस्त्रीत्ववत्तया सरसतरमिति । अतश्चैतादृशाः सूरय एव सदा संसेव्यास्सर्वैरपि ।

श्रुतिस्त्वाह—'आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति परमात्मनः श्रवणादिविषयत्वमिति । एतत्परमतात्पर्यभूतमर्थं स्मृतिराह—

'आह्लादशीतनेत्राम्बुः पुलकीकृतगात्रवान् ।
सदा परगुणाविष्टो द्रष्टव्यः सर्वदेहिभिः ॥' इति ।

अस्यार्थः — सदा भगवद्गुणानुभवजनितप्रीतिपरवशः शीतलतरानन्दबाष्पविसरेणैव तादृशपारवश्येन रोमाञ्चितगात्रः भागवतोत्तमः सर्वदेहिभिर्द्रष्टव्यः । भगवांस्तु कर्मज्ञानभक्तिनिष्ठैरेव द्रष्टव्यो भवति । एते हि भागवतोत्तमाः सर्वदेहिभिः ज्ञानिभिरज्ञानिभिश्च द्रष्टव्याः । इत्येषामेव दर्शनविषयत्वमाह । 'सदा द्रष्टव्य' इति सदादर्शनविषयत्वमप्येतेषामेवेति च । 'अत्र परत्र चापि' इति हि परमाचार्याः श्रीयामुनमुनयोऽप्यनुसन्दधते स्वकीये स्तोत्ररत्ने ।

विभवावताराणामेषां तदानीन्तनैरेवानुभाव्यत्वेन स्रोतःप्रवाहस्येव कालान्तरे देशान्तरे च गतकल्पत्वेनेदानीन्तनैरपि द्रष्टव्यत्वाय देवमन्दिरेषु दिव्यार्चारूपेण प्रतिष्ठापनं कृतं ज्ञानिभिः भक्तवर्गैः । एतेषामवतरस्तदातदा प्रवर्तत इति प्रमाणैरुपलभ्यमानश्चेदानीमप्यनुभूयते यादवाद्रौ वरवर्णिनीशरीराधिष्ठितलक्ष्मीदासावतारे । शुकशौनकादय इवैते सूरयः तदातदाविर्भावतिरोभावैर्जगदनुगृह्णन्त्यद्यापि ।

## सूरीणां चारित्रकग्रन्थाः

तेषां गुणगणानुभवरूपचरित्रविशेषान् ग्रन्थरूपेण च न्यबध्नन् केचन आचार्याः शिष्यपरम्परया ऐतिह्यरूपेण कथ्यमानान् कथावशेषान् । एतादृशचारित्रकप्रबन्धनिबन्धकेषु प्रप्रथमः श्रीनिवाससूरिः । यः किलाचार्यरामानुजाचार्येण नियुक्तः श्रीरङ्गनाथवैद्यशालायाः अधिकारे 'वैद्यराजः' 'गरुडवाहनपण्डितः' इति च प्रथामवाप । स चाष्टादशसर्गात्मकं 'दिव्यसूरिचरितम्' नाम महाकाव्यं व्यरचयत् । द्वितीयश्च श्रीपराशरभट्टारकः । यश्च कूरनाथकुमारः श्रीरामानुजार्यकरुणापूर्णपात्रं स्वयं निबबन्ध 'दिव्यसूरिप्रभावदीपिका' 'गुरुपरम्पराप्रभावदीपिका' इति च ग्रन्थद्वयीम् । तत आरभ्याद्यावधि नामतो ग्रन्थतो वा समुपलभ्यमानाः दिव्यसूरीणां चारित्रकाः सम्प्रदायप्रबन्धा एते—

१) दिव्यसूरिचरितम् — श्रीनिवासकविः क्रि. श. ११-१२ शताब्दी
(१८ सर्गाः)

२) दिव्यसूरिप्रभावदीपिका } श्रीपराशरभट्टारकः क्रि. श. ११-१२ शताब्दी
३) गुरुपरम्पराप्रभावदीपिका }

४) विज्ञानस्तुतिः — गोविन्दयतिः (एम्बार्) क्रि.श. ११-१२ शताब्दी

५) रामानुजचरितम् —श्रीबालधन्विगुरुः (नष्टम्) ,,

६) चरमोपायसारः — माधवमुनिः (नञ्जीयर्) क्रि. श. १२ शताब्दी

७) श्रीवैष्णवप्रकारः — कलिवैरिदासः (नम्बिळ्ळै) क्रि. श. १३ शताब्दी

८) जयन्तीमाला

९) प्रपत्तिसोपानम्

१०) प्रपन्नकल्पकः

११) गुरुपरम्पराप्रभावम् (बृहत् १२ सहस्रग्रन्थात्मकम्; पन्नीरायिरप्पडि)
३२ अक्षराणाम् एको ग्रन्थः इति व्यवहारः — पश्चात्सुन्दरमुनिः
(पिन्बळहियपेरुमाळ्जीयर्) क्रि. श. १३ शताब्दी

१२) गुरुपरम्पराप्रभावम् ,, ,,
(मध्यमम् ६ सहस्रिका)

१३) गुरुपरम्पराप्रभावम् ,, ,,
(३ सहस्रिका)

१४) वार्तामाले ,, ,,

१५) ज्ञानार्णवम् — श्रीरङ्गराजाध्वरी १३-१४ शताब्दी

१६) गुरुपरम्पराप्रभावम्—द्राविडवेदान्तदेशिकः ,,

१७) ! कोलवराहगुरुः क्रि. श. १४ शताब्दी

१८) ! चतुर्ग्रामदेवराजः ,,

१९) नारायणचरितम् — नारायणमुनिः १५ शताब्दी

| | | |
|---|---|---|
| २०) आचार्यचरितामृतम् | ? | क्रि. श. १५ शताब्दी |
| २१) गुरुपरम्पराप्रभावदीपिका— | वेदान्तिरामानुजमुनिः | ,, |
| २२) उत्तरसूरिचरितम् | ? | |
| २३) दिव्यसूरिजयन्तीस्तवः | अप्पिळ्ळै | १६ शताब्दी |
| २४) रामानुजार्यदिव्यचरिता | लोकाचार्यमुनिः | ,, |
| २५) गुरुमुक्तावली | परवस्तुमुनिः | ,, |
| २६) गुरुपरम्पराप्रभावम् | ब्रह्मतन्त्रयतिः | ,, |
| २७) महाश्रीमौळिक्रमः (पेरियतिरुमुडियडैवु) | वाघूलश्रीनिवासः | ,, |
| २८) प्रपन्नामृतम् | अनन्तार्यः | १६-१७ शताब्दी |
| २९) श्रीवैष्णवसमयाचारनिष्कर्षः | लोकाचार्यमुनिशिष्यः | ,, |
| ३०) रामानुजचरितन्नु | चिक्कुपाध्यायः | १७ शताब्दी |
| ३१) इतिहासमाला | रामचन्द्रयतिः | |
| ३२) प्राचीनमार्गप्रकाशः (पळनडैविळक्कम्) | वाघूलवीरराघवः | १८ शताब्दी |
| ३३) त्रिंशत्प्रश्नोत्तरम् | ,, | ,, |
| ३४) असद्गुरुचरितम् | वेङ्कटलक्ष्मणमुनिः | १९ शताब्दी |
| ३५) प्रबन्धनिर्वाहम् | ? | |

इत्यादयः ।

### प्रकृतग्रन्थावतरणम्

तेषु षट्सहस्रग्रन्थसंख्यापरिमितं नातिसंग्रहविस्तृतं संस्कृतद्राविडोभयभाषासङ्कलनरूपमणिप्रवाळमयं श्रीमत्पश्चात्सुन्दरमुनि(यज्ञेशसूरि)विरचितं गुरुपरम्पराप्रभावमेव सर्वेप्याद्रियन्ते । अतस्तमेव ग्रन्थं भागशोऽन्ववदन् गैर्वाण्या वाण्या सकलजनोपकारायास्मदाचार्यास्तातपादाश्च श्रीमन्तो वाधूलधन्विकुलकलश-

जलनिधिकलानिधयः साहित्यरत्नाद्यनेकबिरुदाङ्किताः श्रीजगद्गुवेङ्कटाचार्यस्वामिनः। यश्च तैर्यादवाद्रिविराजमानसंस्कृतमहाशास्त्रशालाङ्गभूतया गीर्वाणभाषाभिवर्धिनीसभासमाख्यया विद्यार्थिसभया प्रवर्तितेषु तत्तद्दिव्यसूर्यवतारदिनोत्सवोपन्यासेषूपन्यस्तो ग्रन्थरूपतामवाप। यश्चायं ग्रन्थोऽज्ञनमुखेनाधिष्ठानावसरे तैस्तैरेव दिव्यसूरिभिः सादरं सप्रेम सौत्सुक्यञ्च निशम्य सशिरःकम्पञ्च संश्लाघितोऽभूत्।

दिव्यसूरीणां कालविचारः

केचनार्वाचीनाः पण्डिताः एते दिव्यसूरयः क्रिस्ताब्दीयसप्तमशतकादारभ्य नवमशतकपर्यन्ते काल एवासन्निति वदन्ति। यतश्च विशिष्टाद्वैतसिद्धान्तस्थापकाचार्याद्रामानुजाचार्यादनतिपूर्वे काले (प्रायः क्रिस्ताब्दनवमशतकान्त्यभागे) स्थितं रामानुजार्यपरमाचार्यश्रीयामुनमुनिपितामहं श्रीनाथमुनिं प्रति साक्षादेव चतुस्सहस्रगाथानां द्राविडभाषामयानामुपदेशः श्रीपराङ्कुशमुनिना शठकोपापरनाम्ना कारिसुतेनाकारि। अतश्चायमेवान्तिमो दिव्यसूरिः। चतुःसहस्रगाथानां समस्तदिव्यसूरिकृतानामप्युपदेशकरणात् सर्वेषु दिव्यसूरिषु प्रधानतम इति च।

किञ्च, यदा मधुरकविना 'शङ्गप्पलहै' नामके द्राविडकवीनामुत्तमोत्तमत्वनिर्णायके स्थले श्रीपराङ्कुशमुनिसूक्तिमात्रेण तस्या एवोत्तमोत्तमत्वं निरणायि; तदा किल कम्बर् नामकः द्राविडमहाकविः चकितो विस्मितश्च पराङ्कुशं तुष्टाव पद्यैः पञ्चपञ्चाशद्भिः। अतोऽपि पराङ्कुशः कम्बर् समानकालिकः। कम्बर् नामकश्च पूर्वोदितकालवर्तीति च निश्चितम्।

अपि च परकालसूरिणा सम्बन्धाख्यः (तिरुज्ञानसम्बन्धर्) शैवकविः जित इति तच्चरिते वर्णनात्, तस्य च सप्तमाष्टमशतकेषु स्थितत्वात् परकालसूरेः कालोऽपि स एवेति।

परञ्च परकालसूरिः स्वप्रबन्धे काञ्चीस्थम् अष्टभुजनामकं भगवन्तं स्तौति (पेरियतिरुमोऴि २ शतके ८ दशके १० पद्यम्)। तत्र च स भगवान् वज्रमेघ (वयिरमेह) नामकेन राज्ञा वन्दित इति वर्णयति। स च राजा अद्यतन'बादामि'नामककर्णाटदेशगतनगरप्रान्तस्थितः तदातनः 'दन्तिदुर्गवज्रमेघ'नामासीत्। स चैतदन्तर एवासीत्। अतः स एवास्यापि कालः इति। अपरं च 'पल्लवन् विल्लवन्' (पेरियतिरुमोऴि २-९-१) इति तत्रैव वर्णनात् पल्लवानां कालोऽपि स एवेत्यस्यापि कालः पूर्वोदित एवेति।

वयन्तु मनुमहे नैतत् समीचीनमिति। तथाहि;—व्यासो वेदविभागकर्ता महाभारतं ब्रह्मसूत्रं च रचयामासेत्यत्र न कस्यचिद्विवादः। महाभारतोक्त्यैव महाभारतरचनाकालः क्रिस्तात्पूर्वं ३१०० तमो वत्सर इति निष्कृष्टं भवति। स एव व्यासः महाभारते ब्रह्मसूत्रे च पाञ्चरात्रशास्त्रं प्रशंसति। ब्रह्मसूत्रे च पाञ्चरात्राधिकरणे पाञ्चरात्रशास्त्रं पूर्वपक्षशास्त्रतया विवव्रुः शङ्करभगवत्पादाः। आचार्यरामानुजार्यास्तु सिद्धान्ततया। यथाकथमपि स्यात्। अनेन ब्रह्मसूत्रादपि प्राचीनं पाञ्चरात्रशास्त्रमित्यत्र न कोऽपि विप्रतिपद्यते। तत्र पाञ्चरात्रसंहितासु दिव्यसूरीणां नामादिकं श्रूयते। अतो महाभारताद्ब्रह्मसूत्राच्च प्राचीना एते दिव्यसूरय इत्यभ्युपगन्तव्यमेव सर्वैरपि।

किञ्च, अनूचानतयैषां परमप्राचीनत्वेऽद्यावधि सर्वसम्प्रतिपन्ने सत्यपि, विंशतिशताब्द्यासुद्भूतेनाङ्गलजनानुवर्तिना इतिहासशंमन्येन प्राचीनानूचानोक्तिः कथं व्याहन्यते? प्रबन्धोक्ताः पल्लवादयश्चोक्तकालात् प्राक्तनाः आधुनिकपल्लवाद्भिन्नाः कथं वा न स्युः? अत एवोक्तं श्रीपराशरमुनिवरैः विष्णुपुराणे—

"बहुत्वान्नामधेयानां परिसंख्या कुले कुले।
पौनरुक्त्याद्धि साम्याच्च न मया परिकीर्तिता॥" (४-२४-११७) इति।

## दिव्यसूरीणां प्रबन्धाः

एतैश्च दिव्यसूरिभिरुपदिष्टाः भगवदनुभवपरीवाहरूपाः प्रबन्धाः 'दिव्यप्रबन्धाः' 'चतुस्सहस्रगाथाः' 'द्राविडाम्नायाः' इत्युच्यन्ते । वेदोपबृंहणरूपत्वेन चैतेषामुपबृंहणेषु मुख्यतमत्वं च वरीवर्ति । मन्त्रब्राह्मणादीनां विवरणविवरणिभावे सत्यपि यथा वेदत्वं न हीयते, तथैवैषां वेदत्वोपबृंहणत्वयोर्न विरोधः । एते च चतुर्विंशतिसंख्याकाः प्रबन्धाः गायत्र्यक्षरसमसंख्यतया गायत्रीरामायणवत् गायत्रीस्वरूपास्तदर्थप्रतिपादका इत्यपि प्रसिद्धमेव । याज्ञवल्क्यब्रह्मोपनिषदि विष्णुयामळतन्त्रादौ च स्पष्टतरोऽयं विषयः । एते च संख्यया अन्यूनानतिरिक्ताः 'चतुस्सहस्रगाथाः' इत्युच्यन्ते । आभिस्सह 'रामानुजनूत्तन्दादिः' इति च पञ्चविंशः प्रबन्धः श्रीरङ्गनाथनियमनानुसारमर्थपूर्तये पठ्यते । न तु चतुःसहस्रसंख्यापूर्तये ।

दिव्यसूरिभिश्चैतैरनुगृहीता अनुपदिष्टाश्चानिर्दिष्टाः प्रबन्धा बहवो वर्तन्ते । तदुक्तं 'वृत्तगद्यात्मिकां रम्याम्' इत्यादिप्रमाणेषु । तदेवमनुभूयन्ते प्रत्यक्षमेवास्मदादिभिरधिष्ठानमुखेन तत्तद्दिव्यसूरिभिरुपदिश्यमानाः वृत्तगद्यात्मकाः प्रागुक्तप्रबन्धानुबन्धभूताः प्रबन्धा अद्यतने लक्ष्मीदासाधिष्ठानावतारे यादवाद्रौ इति ।

## दिव्यदेशाः

एतैश्च दिव्यसूरिभिरनुभूतानि सङ्कीर्तितानि च दिव्यक्षेत्राणि दिव्यदेशा इत्युच्यन्ते । तानि च प्राधान्येनाष्टोत्तरशतसंख्याकानीति विश्रुतानि । यतश्च विशेषतस्स्वयं सन्निहितो भगवानत्यादरेण तेषु क्षेत्रेषु । तेष्वपि प्रधानतमं दिव्यदेशचतुष्टयम् । तच्च श्रीरङ्गं, वृषगिरिः, करिगिरिः, यदुगिरिः इति नामभिः प्रसिद्धम् । तदेतत् सम्यक् निरूपितं पूर्वोदिते गुरुपरम्पराप्रभावग्रन्थे ।

निगमान्तगुरुभिरपि तदेव दृढीकृतं सङ्कल्पसूर्योदये स्वकीये नाटके —
'श्रीरङ्गं वृषभाचलं करिगिरिं श्रीमद्यदुक्ष्माधरम्' (अंके १० श्लो ९०)

दिव्यदेशमङ्गलाशासने च—

विधिविहितसपर्यां वीतदोषानुषङ्गाम्

उपचितधनधान्यामुत्सवैस्त्यानहर्षाम् ।

स्वयमुपचिनु नित्यं रङ्गधामन् ! स्वरक्षां

शमितविमतपक्षां शाश्वतीं रङ्गलक्ष्मीम् ॥१॥

प्रशमितकलिदोषां प्राज्यभोगानुबन्धां

समुदितगुणजातां सम्यगाचारयुक्ताम् ।

श्रितजनबहुमान्यां श्रेयसीं वेङ्कटाद्रौ

श्रियमुपचिनु नित्यं श्रीनिवास ! त्वमेव ॥२॥

वरद ! विरचय त्वं वारिताशेषदोषां

पुनरुपचितपुण्यां भूषितां पुण्यकोट्या ।

सितमुदितमनोभिस्तावकैर्नित्यसेव्यां

हतरिपुजनयोगां हस्तिधाम्नस्समृद्धिम् ॥३॥

नवनवबहुभोगां नाथ ! नारायण ! त्वं

विरचय दुरितैर्वैस्तामनाघ्रातगन्धाम् ।

सहजमुलमदास्यैस्सद्भिरभ्यर्थनीयां

यतिपरिवृढहृद्यां यादवाद्रेस्समृद्धिम् ॥४॥ इति ।

श्रीरम्यज मातृमुनिभिरपि स्वकीये मङ्गलाष्टके—

लक्ष्मीचरणलाक्षाङ्कसाक्षिश्रीवत्सवक्षसे ।

क्षेमङ्कराय सर्वेषां श्रीरङ्गेशाय मङ्गलम् ॥१॥

श्रियःकान्ताय कल्याणनिधये निधयेऽर्थिनाम् ।

श्रीवेङ्कटनिवासाय श्रीनिवासाय मङ्गलम् ॥२॥

अस्तु श्रीस्तनकस्तूरीवासनावासितोरसे ।

श्रीहस्तिगिरिनाथाय देवराजाय मङ्गलम् ॥३॥

कमलाकुचकस्तूरीकर्दमाङ्कितवक्षसे ।
यादवाद्रिनिवासाय सम्पत्पुत्राय मङ्गलम् ॥४॥ इति ।

महीशूरजनपदगताद्यतनश्रवणबेळगोळनामके पद्मगिरौ श्रीरामानुजसयमिसार्वभौमविजयस्थाने जैनमन्दिरगतशिलालेखे च — ' कोयिल् तिरुमलै पेरुमाळ्कोयिल् तिरुनारायणपुरं मुदलाद ' इति दिव्यदेशचतुष्टयं प्रकीर्तितम् ।

यतीन्द्रप्रवणप्रभावे च स्पष्टमेतदेव प्रतिपादितम् । तदेव च ' पेरियतिरुमुडियडैवु' नामके वाधूलश्रीनिवासार्यकृते द्राविडग्रन्थे उपोद्घातप्रकरणे स्पष्टमभाणि । तत्र च प्रमाणतया श्रीरामानुजार्यदिव्यसूक्तिरुदाहृता । सा च

' श्रीरङ्गमङ्गलमणिं करुणानिवासं
श्रीवेङ्कटाद्रिशिखरालयकालमेघम् ।
श्रीहस्तिशैलशिखरोज्ज्वलपारिजातं
श्रीशं नमामि शिरसा यदुशैलदीपम् ॥ इति ।

यामुनार्यैकलव्यस्य श्रीरामानुजार्यस्यैवमनुसन्धाने कारणञ्च प्रपन्नजनकूटस्थस्य श्रीपराङ्कुशमुनेरन्तरङ्गसम्मर्शननिपुणधिषणावत्त्वमेव । पराङ्कुशमुनिः हि स्वप्रबन्धस्य प्रथमे 'उयर्वर' इत्यादिपद्ये प्रथमपादेन श्रीरङ्गनाथं द्वितीयेन श्रीवेङ्कटाचलनिलयं, तृतीयेन हस्तिगिरीशं श्रीदेवराजं, चतुर्थेन च लक्ष्मीविशिष्टचरणवत्त्वरूपाव्यभिचरितलिङ्गप्रतिपादितं श्रीयादवाचलाधीशं श्रीनारायणं च स्वग्रन्थपरमतात्पर्यं बोधयामास । तस्याप्येवं निरूपणे कारणमेवमुन्नीयते— यतः पाञ्चरात्रे रत्नत्रयान्तर्गतयोः सात्वतजयाख्ययोः संहितयोरयमेवार्थः स्पष्टमभ्यधायि । यथा जयाख्यसंहितायां प्रथमपटले प्रथमाध्याये—

भगवद्व्यक्तिदेशेषु स्वयंव्यक्तेषु भूतले ॥८॥
अष्टोत्तरशते मुख्यं रत्नभूतं चतुष्टयम् ।
श्रीरङ्गं वेङ्कटाद्रिश्च हस्तिशैलस्ततः परम् ॥९॥
ततो नारायणाद्रिश्च दिव्यस्थानचतुष्टयम् ॥.......

सात्वतं यदुशैलेन्द्रे श्रीरङ्गे पौष्करं तथा ॥१२॥
हस्तिशैले जयाख्यञ्च साम्राज्यमधितिष्ठति ।
पाद्मतन्त्रं हस्तिशैले श्रीरङ्गे पारमेश्वरम् ॥१३॥
ईश्वरं यादवाद्रौ च कार्यकारि प्रचार्यते ॥ इति ।

ईश्वरसंहिताया विंशे अध्याये च—

नारायणो मुनिश्रेष्ठाः स्थितो नारायणाचले ॥२१॥ ........
क्षेत्रेष्वेतेषु योगीन्द्राः सारभूतं चतुष्टयम् ॥१११॥
श्रीरङ्गं वेङ्कटाद्रिश्च हस्तिशैलस्त्वनन्तरम् ।
ततो नारायणाद्रिश्च मम धामचतुष्टयम् ॥११२॥ इति च ।

एवं श्रीपाञ्चरात्रसंहिताभिः प्रपन्नजनकूटस्थेन पराङ्कुशमुनिना गुरुपरम्पराभिश्च मुहुर्मुहुरुद्गीतसोद्गीथप्रनिपाद्यस्य श्रीयादवाचलाधीशितुः श्रीनारायणस्य सर्वसूरिभिरप्यनुभूतत्वम् अनुभूतप्रकारेण गीतत्वञ्चानिच्छद्भिरिच्छद्भिरपि सर्वैः सम्प्रतिपत्तव्यमेव ।

किञ्च, १८७८ क्रिस्ताब्दे मद्रास् विवेककलानिधिमुद्रालये मुद्रिते गुरुपरम्पराप्रभवे षट्सहस्रिकायां (आरायिरप्पडि) परकालचरिते द्वादशसहस्रिकागत (पन्नीरायिरप्पडि) विशेषविषयनिरूपणप्रस्तावे 'सालग्रामं, तोण्डनूरु, तिरुनारायणपुरम् मुदलानवै सेवित्तु' इति निरूपितं वर्तते। अतश्च कलिजितापि यादवाद्रिस्सेविता । 'नारायणवेन्नुं नामं' 'नमो नारणमे' इत्यादिषु च गीतो नारायण इति च स्पष्टीभवति ।

किं बहुना ! निष्पक्षपातितया माध्यस्थ्यमवलम्बमानः आचार्यबृहस्पतिः स्वकीयेऽर्थशास्त्रे यादवाद्रिं प्रशंसति—'अष्टवैष्णवक्षेत्राः । बदरिका-सालग्राम-पुरुषोत्तम-द्वारका+अहोबिल-वेदाचल+अनन्तसिंह-श्रीरङ्गाः' (११९-१२०) इति । उत्तरदेशेषु चत्वारि, दक्षिणेषु च चत्वारि विष्णुस्थानानि प्रधानानीति तात्पर्येण प्रतिपादयति । 'वेदाद्रि.' इति प्राक्तनं यादवाद्रेर्नामेति स्फुटमेव ।

श्रीरामानुजार्यैः श्रीरङ्गक्षेत्रे समारब्धं समुद्दिष्टं कार्यजातमेव यादवाद्रौ परिपूर्णतया स्वेच्छानुगुणं निर्वर्त्य व्यवस्थापितम् । अतः श्रीरङ्गादीनां चतुर्णां समप्राधान्यमवगम्यते । न तु तत्रापि तरतमभावो विवक्षितः । अत एव 'मम धामचतुष्टयम्' इति समाहृत्यैवोक्तं संहितायाम् । न तु प्रथमं द्वितीयमित्यादि । एतेन यादवाद्रिर्दिव्यसूरिभिः न सङ्कीर्तितेति केषाञ्चिद्वादो निरस्तः ।

एवञ्च दिव्यसूरयो दिव्यप्रबन्धाः दिव्यदेशाश्चात्रैव दिव्यत्वमात्मनो गुणगणादिनानुष्ठानेन च काङ्क्षमाणैस्सर्वैरपि सादरं सविश्वासं सानन्दं च संसेव्या इति भक्तेषु विरक्तेषु ज्ञानिषु च मुक्तकल्पेषु नमोवाकं प्रयुञ्जन्नयम् अकिञ्चनः किञ्चिदेवं व्यज्ञापयत् ।

ग्रन्थस्यैतस्य प्रकाशने साह्यकृतो भारतकेन्द्रसर्वकारस्य, उपोद्घातादि-लेखने विषयसंग्रहणे साह्यकृतश्चिरायुष्मतो भागिनेयस्य विद्वद्वरस्य श्रीरामशर्मणः उपोद्घातस्यैतस्याङ्ग्लभाषानुवादे साह्यकृतां प्रो. वि. टि. तिरुनारायणय्यङ्गार्याणां, ग्रन्थमेनं सम्यक्सम्मुद्य सकाले साह्यमारचितवतां संस्कृत-साहित्य-सदनस्य अधिकारिणां च सविधे कृतज्ञतामर्पयन् उक्तिमेतामुपसंहरामि ।

महीशूरनगरी
१५-९-६९
सौम्य भाद्रपद शुक्ल
पञ्चमी-बुधवासरः

भागवतचरणनलिनपरिचरणचञ्चरीकाणां
पदपङ्कजपरागपरिग्रहधन्यजन्मा दासः
वालधन्वि जग्गु सुदर्शनाचार्यः
विशिष्टाद्वैतविभागप्राध्यापकः
महाराजसंस्कृतमहापाठशाला, मैसूरु

# INTRODUCTION

I bow before the Divine Seers of great devotion and detachment through the spontaneous compassion of Viṣṇu whose ambition is the upliftment of men

The Lord of Śrī, the Supreme Person endowed with infinite auspicious qualities, the Self fulfilled Absolute known as Para-Brahman, the sole cause of the world in the Abode of Bliss afforded to men an opportunity for salvation by providing them with body and senses and by offering the many lores of knowledge and their imparters, enabling them to grasp the five-fold truth

Men remaining still immobile and uninformed, the Lord chose the path of incarnating Himself and, appearing as Nara and Narayana, demonstrated the conduct respectively of the pupil and the preceptor The incarnation appeared in a series with the aim of turning the human mind along the right path The abnormality observed in the incarnations kept people away under fear Thereupon the Lord introduced into the troubled world devotees sanctified by His grace, who, being finite minds alike the straying minds, taught and lived a life of stainless serenity

THE PRE EMINENCE OF THE DIVINE SEERS

The divine seers by the grace of the Almighty, tided over the surging waves of ignorance, possessed knowledge of the Real, the means to it and the value of realising it, and stationed themselves securely at the final end of God dependence Pained at seeing men plunged in ignorance despite their intrinsic deservedness to enjoy Bliss, the Seers passed on their wisdom and put a great many along the path to Perfection, instilling enduring devotion and subservience towards God This type of effort proved effective and agreeable The Seers who were successful in this mission naturally became receptacles of God's unique grace and love Of the innumerable gifted seers, ten have come to be adored as prominent even as the ten Avataras of God in the

infinite series of His descent They are — 1 Bhūtamuni 2 Saromuni 3 Mahadahvayamuni 4. Bhatta natha 5 Bhaktisara 6 Kulaśekhara 7 Yogivāha 8 Bhaktanghri reṇu 9 Parakala and 10 Parankus'amuni Sri Goda, daughter of Bhattanathamuni and Madhura Kavi, the direct pupil of Sri Parankus'amuni, though counted as the eleventh and twelfth, are treated along with their Ācaryas Mention of this category of acaryas is made in the Pañcaratras with great respect and praise

The relative merits of the divine seers are based on their out-look and conduct As the seers emerge far superior to the common man, so the divine seers occupy a status far superior to the seers Among the divine seers, Bhattanatha occupies a high status for, ignoring his personal gain, Moksa he offered what is known as *Maṅgalās āsanam* (heaping goodwill) to the Almighty surrounded in the world by persons spiritually polluted by the advent of the age of Kali. The disparity between Bhattanatha and Goda, his daughter, is equally glaring Normally the Lord awakens the mortals from their slumber and presents Himself before them Goda on the other hand took the initiative and waking up the Slumbering Lord' prevailed upon Him to condescend to accept her service and install her on the Throne of Service The sex of Goda gains significance in the context of devotion taking the form of love when the finite mind becomes the spouse

The importance of the role of the devotee even in preference to the Almighty is stressed in the s'astras and he is projected as the only object of constant observation and approach The Upanisads speak of Ātman as the one object of hearing, consideration, meditation and intuition Revealing the inner significance of the Upanisadic Ātman, the Smrti contains the remark—

*Āhlāda sīta netrāmbuh pulakīkṛta gātravān*
*Sadā paragunāviṣṭah draṣtavyah sarva dehibhih*

The splendour of the 'Observing Reality' is more inviting to man than that of the 'observed Reality ' The observer is seen God intoxicated, with his body bristling all over and his eyes

shedding tears of joy This is a thrilling experience of one in true ecstacy and He alone deserves to catch our attention, for all times

The divine seers lived long ago They are installed and preserved in iconic frames in the holy places providing an opportunity for their meditation and worship The seers appear off and on like Suka and Saunaka and even in modern times we do come across seers such as Laksmidasa in Yadavadri (Melkote)

### Biographies of the Divine Seers

The biographical sketches about the divine seers mainly deal with the story of their shaping under the grace of God Many such books have been written in Sanskrit, Sanskritised Tamil (*Maniprav̄āla*) and other languages of the land Thirty five such books are now available, although many of them are still in manuscript form The first of the writers is one Garudavahana-Paṇḍita, a contemporary of Sri Ramanujacaraya

The present work is a version in Sanskrit of the not unwieldy classic of Pas'cat Sundaramuni It was written by Sri Jaggu Venkatacarya svamin of the Baladhanvin family, who hailed from Yadavadri A renowned scholar, honoured all over for his deep, wide and critical learning and adored for his pious living, Venkatacarya acceded to the wishes of scholars, savants and students at Melkote, gave discourses on occasions of avatara (birth day) celebrations of the respective Divine Seers and later preserved them in his writings

### The Age of The Divine Seers

Modern scholars hold that the Divine Seers flourished between the 7th and 9th century A D Ramanuja was born in 1017 A D Nathamuni the grand father of Sri Yamunacarya Ramanuja's parama guru may be said to belong to the 9th century A D He obtained the Dravida Veda direct from Parankus'a more commonly known as Sathakopa or Nammalvar The entire bulk of the Dravida Veda and the several seers responsible for the different sections of the Dravida Vedanta must be assigned to a period in which Saṭhakopa figures as the last

Madhurakavi, a direct disciple of Śathakopa is said to have produced a verse of his master at a great gathering of Tamil scholars and poets A noted poet, Kambar by name, acknowledged the towering quality of Sathakopa's work and, in token of that recognition, he composed a classical piece, viz, *Sathagopan andādi* in Tamil. This incident leads to the conclusion that Madhurakavi was a contemporary of Kambar

Sambandhar, another Saivite poet of great fame, who belonged to the 7th century A D, is said to have met Parakala, another divine seer, and invited him to a controversy in which Parakāla came out victorious Parakala makes mention of a king Vaira megha who is identified with Dantidurga Vajramegha There is also a reference to Pallva kings These are some of the considerations of modern scholars to fix the age of the Divine Seers somewhere between the 7th and 9th cent A D

Another type of evidence is availabe to maintain that the Divine Seers (Ālvars) belonged to great antiquity Vyasa, the author of the Brahma Sutras and the epic Mahabharata, lived prior to 3000 B C as evidenced by the Mahabharata itself In the Brahmasutras (Pañcaratra adhikaraṇa) Vyasa discusses the validity of the Pañcaratra which on that account must belong to a still earlier period Sankara, Ramanuja and other Vedantins have construed the four sūtras of the said adhikaraṇa as relating to the validity of the Pañcaratras although that name is not specifically mentioned therein In the Pancaratra Samhitas mention is made explicitly of the divine seers and their contribution It is therefore appropriate to hold that the Divine Seers lived even prior to Vyasa, i e 3100 B C

As regards the names Pallava etc, occurring in the works, one way of thinking is that a name is not restricted to one person only but it may refer to many in the series bearing that name The Visṇu-puraṇa makes this point clear in IV 24-117.

*Bahutvān nāmadheyānam parisaṅkhyā kule kule*
*Paunaruktyaddhi sāmyāc ca na mayā parikīrtitā*

In the absence of sufficient data to the contrary, on the basis of internal evidence vital to the growth of philosophic life,

it may not be improper to assign to the divine seers the age given them in the traditional biographic works.

### The Works of the Divine Seers

Expressions passed through the medium of the divine seers immersed deep in divine ecstacy came to be known as the Divine Songs, the Dravida Veda, etc They share in full measure the characteristics of what is commonly regarded as the Vedas Their teaching is the *elucidation of the Vedanta philosophy They are* styled as the best gloss They are the Vedas in so far as they refer to the vedic content directly, independently and in comprehension They are also an elucidation as they present the content with utmost clarity and fulness. These Prabandhas are 24 in number containing a total of exactly 4,000 verses. Like the *Gāyatrī* Ramayaṇa, they contain the import of Viṣṇu Gayatrī Many other works in prose and in verse are said to have been composed by them as gathered from the line "Vṛtta gadyātmikam ramyam" The prabandha dedicated to Śrī Ramanuja known as *Rāmānuja nuttandādi* forms an integral part of Prabandha litereture as it *refers to the apostle's "Ātman enlightenment" covering the* intention of the Upaniṣadic "Ātman"

### The Holy Shrines

Holy shrines are those where the Creator has chosen to reveal Himself in full halo and glory They are known as Divya *deśas* They are *said to be 108 in number* The *divine* seers refer to these shrines Of them 4 are specially significant The significance is shared by these four uniformly This is mentioned in the Guruparampara works in detail Sri Vedanta deśika of the 13th—14th century A D refers in his Sankalpa-Suryodaya X 90 to these four important shrines, viz, Sri Ranga, Vrsabhacala, Karigiri and Srimad Yadu-ksmabhrt

Sri Ramya Jamatrmuni (14th cent A D) in his mangala-astaka refers to the four shrines including Yadavadri —

*Kamalākuca kasturī kardamaṅkita-vakṣase*
*Yādavādri nivāsāya Sampatputrāya maṅgalam*

In the famous place of Sravana Belagola, a Jaina resort, a Kannada stone inscription reads thus *Koil Tirumalai Perumāl koil Tirunārāyanapuram modalāda* In the Yatindra pravaṇa prabhava all these four shrines are mentioned The verse attributed to Ramanuja cited in the above work refers to the four shrines

*Sriranga mangala manim karunā-nivāsam*
*Srivenkatadri sikharālaya kālamegham*
*Srihastisaila sikharojjvala parijātam*
*Srisam namāmi sirasā yadus ailadipam*

Ramanuja, the Ekalavya of Yamunacarya has included Yadus aila on the authority of Parankus'a in the first verse of his Tiruvaimoli which refers to the four shrines in the four feet of the verse The last foot refers to the feet of Narayaṇa associated with Sri in a general way and in particular in the first decad of the 4th centum known as *Oru nāyagam* Of the Pañcaratra the two samhitas Satvata and Jaya pointedly refer to the four shrines —

*Bhagavad vyakti des esu svayam vyaktesu bhutale*
*Astottaras ate mukhyam ratnabhutam catuṣtayam*
*Srirangam Venkatādris ca Hastis ailas tatahparam*
*Tato Narāyanādris ca divya sthāna-catustavam*

It is to be remembered that the four shrines have received uniform consideration at all stages in the history of Sri Vaisnava religion The contention that only three shrines, to the exclusion of Yadavadri of immense value to the religious minded, is recognised by the Ālwars is therefore unfounded and unorthodox

The Guruparampara in essence serves the purpose of throwing light on the God soaked Divine Seers, their works and the holy shrines of lasting and untainted sanctity which have raised them to heights from which they ceaslesly shower their blessings on mankind to secure their emancipation

A close study of the lives and works of Ālvars reveals the reasures of knowledge which would otherwise lie for ever hidden

*Maharaja's Sanskrit College*
*Mysore 15-9-1969*

JAGGU SUDARSANACHAR

॥ श्रीः ॥

श्रीमते रामानुजाय नमः

श्रीमद्भ्यो दिव्यसूरिभ्यो नमः

# दिव्यसूरिचरितानि

---

## गुरुपरंपराप्रभावावतारिका

श्रियःपतिरवाप्तसमस्तकामः सकलकल्याणगुणगणखनिः नारायणः परवासुदेवो निखिलश्रुतिस्मृतीतिहासपुराणपाञ्चरात्रादिप्रमाणपरंपराभिः प्रतिपादिते, चतुर्दशभुवनगर्भब्रह्माण्डाविशरणाय कल्पितात् सलिलानलानिलगगनाहङ्कारमहत्प्रधानाभिधानदशगुणितोत्तरसप्तसत्त्वावरणात्परतस्स्थितत्वेनास्पृष्टत्रिगुणगन्धे, शुद्धसत्वमये, युगपदुदितदिनकरसहस्रतेजसि, चतुराननादीनामपि वाङ्मनसातिदूरे, दिव्यनानाविधशकुनि-रुत-निरन्तर-सततकुसुमितविविधतरुनिवह-रुचिरे, विविधमणिमयसोपानैः स्फटिकोपलस्वच्छधवलसलिलैः कमलकुमुदकल्हारादिसुमनस्सन्दोहसुन्दरैः चक्राङ्गचक्रवाकमल्लिकाक्षसारसादिजलचरपतगगतिविलसमनोहरैः दिव्यसलिलाशयैः, अनवरतनिपतत्कुसुमकृतसुखशयनैः लताभवनैश्च सकलजनहृदयहारिणि, स्वानुभवितृजनमावितस्वयंभुप्रभृतिसुरवरभवननरकभावे, निखिलपदार्थजातसततपरिणमयितृत्वाधिकारनियुक्तस्यापि कलामुहूर्तादिरूपस्य कालतत्त्वस्यादधाधिकारावकाशे, असंख्यब्रह्माण्डात्मनो लीलाविभूतेरेकपादभूतायाः त्रिपादाधिके, परमानन्दजनके, नित्यासङ्कुचितज्ञानजनने, सकलेतरविलक्षणे, वैकुण्ठाख्ये, परमे पदे, चिद्रूपगोपुरनिचयमयगोपुरप्राकारमण्डप-

वीथीसौधादिभिः ध्वजपताकातोरणस्रगाद्यलंकृतैः निबिडीकृते, वैकुण्ठाख्ये दिव्यनगरे, दिव्यप्रासादे, तत्रापि विविधमणिकुट्टिमोपशोभिते, नानारत्नस्तम्भसहस्रप्रतिबिम्बितसर्वजनवस्तुसन्दोहे, सर्वतोविकीर्णसद्योविदलितमल्लिकाकुन्दजात्यादिकुसुमोत्करे, दिव्यधूपपरिमलामोदिते, तत्र तत्र लम्बमानमुक्तागुच्छकविताने, दिव्यास्थानमण्डपे, अनन्तभोगिनि, धर्मादिपीठमधिष्ठितः, विमलादिभिर्नवभिरपि चामरग्राहिणीभिरमित उपवीजितः, सौन्दर्यलावण्यसौकुमार्ययौवनाद्यनन्तगुणगणपरिपूर्णाचिन्त्यदिव्याद्भुतदिव्यरूपः, स्वानुरूपनानाविधविचित्रनिरतिशयसुगन्धसुखस्पर्शकिरीटादि नूपुरान्त-दिव्यभूषणभूषितसर्वावयव., तादृशभूषणायमानशङ्खचक्रगदासिशार्ङ्गादिदिव्यायुधैस्सेव्यमानः, सर्वमेतत्काननकौमुदीमकुर्वतीभिः स्वामिमतानुरूपस्वरूपरूपगुणविभवादिभिः श्रीभूनीलाप्रभृतिभिरसंख्याभिः दिव्यमहिषीभिः सततमविरहितपरिसरः, कदाचिदप्यस्पृष्टसंसारगन्धैः अनन्तगरुडविष्वक्सेनादिभिः नित्यसूरिभिः शयनासनवाहनसर्वाधिकारनिर्वहणादिभिः किङ्करभावैः सर्वदा परिचर्यमाणः, मुक्तैरपि छत्रचामरताम्बूलदर्पणपतद्ग्रहतालवृन्तभृङ्गारधौतवसनाभरणस्रगादिपरिच्छदैः, प्रदक्षिणनमस्कारानुगमनस्तुतिकीर्तनसामगानादिकैङ्कर्यैश्च परिसेवितः, चण्डप्रचण्डादिभिः द्वारपालैः सप्रहरणपरिवारवाहनैः कुमुदादिभिर्गणनायकैश्च परिचर्यमाण., स्वसङ्कल्परूपाज्ञादण्डमात्रेणोभयविभूतिनिर्वहणसमर्थः, एवंविधपरिकरानुभवजनितेनोन्मत्तकेनानन्देन विस्मृतस्वतनुरपि, अविस्मृतसंसारसागरपरिवर्तगर्तेबम्भ्रम्यमाणनिमज्जचेतनवर्गः, एकाकीवारममाणः, संवर्तसमयसूक्ष्माचित्संपृक्तान् अचित्कल्पान् करणकलेवरविधुरान् चेतनान् नित्यसूरिवत् स्वानुभवार्हानपि तद्रहितान् लूनपक्षानिवाण्डजानवलोक्य दयमानमनाः, महदादिक्रमेण तत्त्वानि पृथिव्यन्तानि सृष्ट्वा करणकलेवरैः संयोज्य, चतुर्मुखादिमुखतः स्मृतीतिहासपुराणपाञ्चरात्रमीमांसाद्युपबृंहितान् वेदान् हेयोपादेयविवेकाय प्राहिणोत् ।

# ŚRĪ SAROMUNI



श्रीसरोमुनिः — पोयगै आऴ्वार्

तुलायां श्रवणे जातं काञ्च्यां काञ्चनवारिजात् ।
द्वापरे पाञ्चजन्यांशं सरोयोगिनमाश्रये ॥

# ŚRĪ BHŪTAMUNI



श्रीभूतमुनिः — पूदत्ताळ्वार्

तुलाधनिष्ठासम्भूतं भूतं कल्लोलमालिनः ।
तीरे फुल्लोत्पलान्मल्लापुर्यामीडे गदांशकम् ॥

चेतनास्तु सृष्टिलब्धकरणकलेवराः भगवत्सेवार्थं दत्तानि शरीरेन्द्रियाणि स्वस्वातन्त्र्यभ्रमेण स्वभोगोपकरणानि मत्वा शब्दादिविषयप्रवणा भूत्वा, नदीनिस्तरणाय दत्तं प्लवं प्रवाहानुसारेण नीत्वा, समुद्रे पतयालव इव संसारसागरे न्यमज्जन् ।

विधिनिषेधशास्त्राण्यपि एषां निरोधने किञ्चित्कराणि नाभूवन् । ततश्च स्वाज्ञाप्रतिघातकेषु दुष्टजनपदेषु स्वयं व्रजन् राजेव परमकारुणिको भगवान् चेतनोद्दिधीर्षया मनुजसजातीयो रामकृष्णादिरूपेणावततार हेयतमेऽपि मनुष्यलोके ।

तदेव मनुजसजातीयत्वमेषां भगवति तिरस्कारहेतुतामवाप— "अस्मादृशः खल्वयं कश्चित् ; न तु भगवानस्मदुज्जीवनायावततार" इति ।

एवमप्यलब्धमनोरथ एव भगवानेवमचिन्तयत्—" एतद्विसजातीयत्वात् नाहमेतत्कार्यं कर्तुं शक्नुयाम् ; किन्तु किञ्चिन्मृगबन्धनेन तत्सजातीयमृगग्राही व्याध इव एतत्सजातीयतयावतार्य नित्यसूरीन् उपदेशप्रबन्धरचनादिमुखेन वशीकुर्याम्" इति ।

ततश्च यथाचिन्तितमेव न्ययूयुजदवताराय मनुष्यरूपेण श्रीवत्सकौस्तुभवैजयन्तीपद्मायुधानन्तगरुडादीन् सूरीन् ।

ते च यथानियोगमवतेरुः नानावर्णेषु भूरिशो द्रविडदेशेषु ताम्रपर्णीकावेर्यादिनदीपरिसरेषु । भगवानपि तेषां निश्शेषनिवृत्ताज्ञानान्यथाज्ञानविपरीतज्ञानसंशयगन्धं स्वस्वरूपरूपगुणविभूत्यादिसर्वविषयं यथावस्थितं भक्तिरूपापन्नं च ज्ञानमनुजग्राह स्वकटाक्षेण ।

ते च भगवन्निर्हेतुककटाक्षलब्धज्ञानभक्तिविरक्त्यो यथादृष्टानेव वेदार्थान् सर्वाधिकारद्राविडभाषया विशदीकृत्य सकलचेतनानुज्जीवयामासुः ।

इत्यवतारिका

# प्रथमसूरित्रयचरितम्

तेषां प्रथमसूरिषु त्रिषु प्रथमस्सरोनामा मुनिः ( पोयूहैयाल्वार् ) केन=चतुर्मुखेन अञ्चित'=पूजितः अत्र भगवानश्वमेधेनेति 'काञ्ची', इति विख्यातायां नगर्यां तत्रापि 'तिरुवे.:.हा'[1] इति दिव्यक्षेत्रे कस्मिंश्चित्सरसि कचित्सरसीरुहे [2]नवशतोत्तरद्विषष्टिसहस्रोत्तराष्टलक्षसंख्याकवत्सरेष्वतीतेषु द्वापरयुगे सिद्धार्थि-संवत्सरे तुलांगते सवितरि श्रवणनक्षत्रे श्रीपाञ्चजन्यांशोऽवततार ।

ततश्च मल्लापुरे[3] ( तिरुक्कडल्मल्लै ) कस्मिंश्चिन्माधवीनिकुञ्जे तत्कुसुमे तस्मिन्नेव वत्सरे मासि च धनिष्ठानक्षत्रे कौमोदकीगदांशभूतो भूतनामा मुनिः अवातरत् ।

ततश्च महदाह्वयो मुनिर्मयूरपुर्यां ('मैलापुर्) कस्मिंश्चित्कूपे रक्तोत्पले तस्मिन्नेव वत्सरे मासि च शततारानक्षत्रे नन्दकाख्यभगवत्खड्गांशोऽवततार ।

तेषु प्रथमस्सरोजातत्वात्सरोमुनिरिति व्यपदिश्यते । द्वितीयो भगवत्-कटाक्षलब्धतज्ज्ञानत्वात् 'सन्तमेनं ततो विदुः'[4] इतिवल्लब्धसत्ताक इति भूत-शब्देन व्यवह्रियते । तृतीयस्तु भगवद्भक्तिरूपोन्मादवत्त्वात् ( पेयाल्वार् ) इति भगवद्भक्तस्यैव महत्त्वात् 'महदाह्वय' इति चोच्यते ।

एवमेते त्रयोऽप्ययोनिजाः भगवन्निर्हेतुककटाक्षवशाद्रजस्तमोरहित-प्रवृद्धशुद्धसत्त्वगुणाः श्रुतिस्मृतिपाञ्चरात्रादिसारभूतपरमपुरुषदास्यैकरसाः भग-वद्गुणानुभवैकधारकतया सनकादिवन्निराहाराः भगवद्विमुखहेयजनसहवसतिभिया ग्रामैकरात्रसञ्चाराः अपरिचितपरस्पराः एकचरा बभूवुः ।

---

[1] यथोक्तकारिसन्निधिक्षेत्रनाम ।

[2] सरोमुन्यादीनामवतारः द्वापरे ८६२९०० तमे वत्सरे इति साम्प्रदायिकाः। (क्रिस्तपूर्व ४२०२) [3] अद्यतन महाबलिपुरम् । [4] तैत्तिरीयोपनिषत् ।— आ. म.

कदाचिद्भगवानेतांस्त्रीनपि स्वात्मभूतान् ज्ञानिनः एकत्र संयोज्य स्वसाक्षात्कारजननाय, तदनुभवपरीवाहरूपप्रबन्धोद्भवाय, तेन च सकलचेतनोज्जीवनाय च सङ्कल्पयामास। यथासङ्कल्पमेव कस्यांचिद्रात्रौ 'तिरुक्कोवलूर्'[5] इति ग्रामे अतिसङ्कटायां शून्यशालायामकस्मादेवैते त्रयोऽपि मिलिताः वैष्णवमर्यादया परस्परवन्दनपराः परस्परप्रश्नेष्वनिर्दिशन्तस्स्वग्रामकुलनामानि भगवद्दास्यैकनिरूपणेन परस्परं बोधयन्त आसन्।

तदैव भगवांस्तेषां त्रयाणामेवातिसङ्कटायां तमोनिबिडायां शालायां तन्मध्ये श्रिया सह प्रविवेश। त्रयोऽपि ते 'कोऽयमपरोऽस्मन्मध्ये प्रविष्टः! पश्येम' इति तं द्रष्टुं प्रथमस्सूर्यमेव दीपमकल्पयत्। द्वितीयो ज्ञानमेव। तृतीयस्तु— 'श्रियमपश्यं; स्पृहणीयं भगवतो दिव्यमङ्गलविग्रहमपश्यम्' इत्याद्यारभ्य प्रत्येकं शतेन शतेन पद्यैर्भगवन्तं तुष्टुवुः।[6]

ते च त्रयो द्राविडप्रबन्धात्संसारिचेतनानुज्जीवयन्ति स्वस्वरूपपरस्वरूपपुरुषार्थस्वरूपोपायस्वरूपविरोधिस्वरूपरूपार्थपञ्चकज्ञानजननेन। यदुच्यते

"प्राप्यस्य ब्रह्मणो रूपं प्राप्तुश्च प्रत्यगात्मनः।
प्राप्त्युपायं फलं प्राप्तेस्तथा प्राप्तिविरोधि च॥
वदन्ति निखिला वेदास्सेतिहासपुराणकाः।
मुनयश्च महात्मानो वेदवेदार्थवेदिनः॥" इति।

## इति प्रथमसूरित्रयचरितम्

[5] मद्रास्, प्रान्ते ('सौत् आर्काट् डिस्ट्रिक्ट्') कडलूर् समीपे वर्तते। तत्रत्यो भगवान् देहलीशः उत्सवबेरः। मूलबेरस्तु त्रिविक्रमः।

[6] सरोमुनिकृतः प्रबन्धः मुदल् तिरुवन्दादि (प्रथमान्तादिः) पद्यसंख्या १००
भूतमुनिकृतः इरण्डां तिरुवन्दादि (द्वितीयान्त्यादिः) पद्यसंख्या १००
महदाह्वयकृतः मून्रां तिरुवन्दादि (तृतीयान्त्यादिः) पद्यसंख्या १००

# श्रीभक्तिसारमहामुनिचरितम्

अथ भगवान् भक्तिसारमुनीन्द्रः (तिरुमळिशैप्पिरान्) एकस्मिन् जन्मनि द्वे जन्मनी ह्यन्वभवत्, यथा वसुदेवसूनुः देवकीजठरयशस्करो नन्दगोपकुमारो यशोदानन्दनश्चेति ।

तस्येदमतिमानुषं चरितम् । — कदाचिदत्रिभृगुवसिष्ठाङ्गिरःप्रभृतयो महर्षयः चतुर्मुखमेत्य भुवि निवासायोत्तमं क्षेत्रं जिज्ञासमानाः पप्रच्छुः किं श्रेष्ठमिति ।

विधाता तु विश्वकर्माणमाहूय सशैलवनतटिनीं भुवमेकस्यां घटाया-मन्यस्याञ्च विदेहभवनक्षेत्रं [1](तिरुमळिशै) निधाप्य तुलया तोलयामास । यदा तु विदेहभवनक्षेत्रस्यैव घटा नोचस्थौ, अन्या तूचस्थौ, तदा महीसारक्षेत्रमिति तस्य नाम निदधौ । ततश्च तेषु मुनिषु तस्मिन्नेव क्षेत्रे निवसत्सु नित्यं भगवति भार्गवे च दीर्घसत्रेण भगवन्तं नारायणं पारमैकान्त्यधर्मेणाराधितवति, तद्धर्म-पत्नी अन्तर्वत्नी अतीतेषु च द्वादशसु मासेषु प्रासूत भगवतः सुदर्शनांशं पिण्डाकृतिं कञ्चन महापुरुषं, यो भक्तिसारमुनिरित्याख्यायतेऽद्यापि ।

यस्मिन् दिवसेऽवततार स महात्मा स तु दिवसो बभूव द्वापरे युगे अनेकलक्षसंख्याकेषु गतेषु वत्सरेषु सिद्धार्थिनाम्नि अब्दे मकरमासस्य सप्त-विंशतितमो मखानक्षत्रानुगतो भानुवासरयुतः कृष्णपक्षप्रतिपन्मितश्च । तदुक्तं दिव्यसूरिचरिते, जयन्तीमालायाञ्च —

" सा गर्भमाधत्त मुनेश्च पत्नी सुदर्शनांशेन तदानुविष्टम् ।
पपात गर्भो भुवि तैष्यमासे मखाभिधाने महनीयतारे ॥ " इति ।

---

[1] मद्रास् नगरतः पश्चात् दश मैल् अभ्यन्तरे मद्रास्-बेङ्गळूरु मार्गे वर्तते ।

# ŚRĪ BHAKTISĀRAMUNI



श्रीभक्तिसारमुनि — तिरुमळिशैप्पिरान्

मघायां मकरे मासे चक्रांशं भार्गवोद्भवम्।
महीसारपुराधीशं भक्तिसारमहं भजे॥

ŚRĪ MAHADĀHVAYASŪRI



महदाह्वयमुनि — पेयाळ्वार

तुळाशतभिषग्जात
महान्त

"सिद्धार्थिन्युष्णरश्मौ मकरमधिगते द्वापरे ज्ञानधारा-
क्षोदे (८६२९००) संवत्सरौघे गतवति च दिने सप्तविंशे मखाख्ये।
नक्षत्रे भानुवारे मुनिवरतनयो भक्तिसारो मुनीन्द्रः
श्रीमान् प्रापावतारं जगदुपकृतये पर्वणोऽन्येद्युरत्र ॥"   इति च।

ततश्चाजातमनुजाकृतिं जरायुपिहितं पिशितपिण्डं भुवि निपतितं पितरौ निरीक्ष्य निर्वेदात् कुत्रचन वेत्रलताकुञ्जे निक्षिप्य यथागतं ययतुः।

ततो निखिलजगज्जनन्या श्रिया प्रेरितया भूदेव्या सुरक्षिते तस्मिन् पिण्डे सर्वावयवसम्पूर्णे स्फुरिते च जीवे सद्योजात इव शिशौ स्तन्यार्थिनि रुदति, तत्क्षेत्राधीशे च [2]भगवति वासुदेवे समागत्यात्मसञ्जीवनेनावलोकनामृतेन आप्याय्य, परिहृत्याशनायापिपासे, प्रदर्श्यात्मनो दिव्यमङ्गलविग्रहमन्तर्हिते, पुनः तद्दर्शनाशया रोदितुमारभत शिशुरमम्।

तदानीं तु 'तिरुवाळन्' इति कश्चन वेत्रलतानयनाय तत्र गतः श्रुत्वा रोदनध्वनिं शिशोः, सहागतैस्सह विचित्य, दृष्ट्वा च वेत्रलतानिकुञ्जे शिशुं, अनीव हृष्टो गृहीत्वानीय स्वनिकाय्यं, स्वभार्याया. पङ्कजसुन्दर्याख्याया. हस्ते न्यस्तवान्।

सा तु वन्ध्यापि प्रस्नुतपयोधरा प्रीत्या वर्धयितुमीहमाना पाययितुं स्तनं यदायतत, तदार्य स्तन्यादिभ्यो निवृत्त आहारेभ्यो भगवद्गुणैकधारको बाल्यवहाररोदनमलमूत्रादिरहितो दिव्यलावण्यपूरितगात्रो यथासुखं ववृधे।

चरितमेतत् विचित्रं श्रुत्वा दृष्ट्वा च त कश्चित् तत्क्षेत्रवासी चतुर्थवर्ण-जातो वृद्धः प्राज्ञोऽपुत्रो निश्चिकाय तस्य शिशोः महामहिमताम्। परेद्युरुत्थाय ब्राह्मे मुहूर्ते, कृत्वा चावश्यकं शुद्धं गोदुग्धं क्वाथयित्वा शर्करादिपरिष्कृतमुष्ण-

[2] तिरुमलिशैक्षेत्रनाथस्य नाम जगन्नाथः।

मानीय भार्यया सह शिशोरुपसमाधाय भक्त्या 'पीयतामिदं पयो दासेयेऽस्मिन् दयया' इत्यसंकृदकृत प्रार्थनाम्। गगाप्रति च भक्तिसारेऽभ्युपगतवति दयया तदभ्यर्थनां, परितुष्टयोस्तयोर्दम्पत्योः प्रत्यहमेवमेव पयस्समर्पितवतोः कस्मिंश्चित् दिवसे स तु महात्मनाः वृद्धयोस्तयोरभिमतमवगत्य यथापुरं पयः परिपीय किञ्चित्, पीतशिष्टमिदं पीयतां, युवाभ्यां प्राप्यतां पुत्रः पुण्यवानित्यनुजगाद। तौ च तत्परिपीतशिष्टं पूतं पय. पीतवन्तौ तदैव प्रापतुस्तरुणताम्। क्रमेण तत्पत्न्यामन्तर्वत्न्यां प्राप्ते च दशमे मासि प्रासूत सा भगवद्भागवतात्यन्त-परतन्त्रं विदुरमिव महाप्राज्ञं सुतम्। पिता तु निदधे नाम तस्य 'कणिकृष्ण' इति। अकारयच्च ज्ञानिनम्।

अथ भगवान् भक्तिसारो भगवद्दयारसैकाहारो विहायाहारं लौकिकं ऋषिपुत्रतया वयसि सप्तम एव यमनियमासनप्राणायामप्रत्याहारधारणाध्यान-समाधिरूपाष्टाङ्गयोगप्रवृत्तो ध्यानसमाध्योः ध्येयैकसाध्यतया कारणस्यैव ध्येयताश्रुतेश्च जगतः कारणमिदमेवेति निर्णेतुं शाक्योलूक्याक्षपादक्षपणककपिल-पतञ्जलि-शैव-मायावाद-भाट्ट-प्राभाकराद्यखिलवाह्यकुदृष्टिमतसिद्धान्तशोधननिरतः सप्तशतं वत्सराननितिवाहयाचकार। अजानाच्च तेषामन्योन्यनिरोधं स्वेनैव विरोधं श्रुत्या बाध सैकतसेतूनामिवानवस्थानञ्च।

निरणैषीच्च तेषामप्रमाणतां प्रामाणिकताञ्च निखिलहेयप्रत्यनीक-कल्याणैकतानस्वरूपस्य सकलकल्याणगुणगणाकरस्य दिव्यमङ्गलविग्रहतद्गुणा-भरण प्रहरण-महिषी परिजन-परिच्छद पारिषदास्थानादिविशिष्टस्य श्रुत्येकप्रमाण-समधिगम्यस्य भगवत. श्रिय पत्युर्नारायणस्यैव जगत्कारणतां तदितरेषा तत्कार्यकार्यता, तत एव तस्यैव ध्येयताम्, अध्येयताञ्चेतरेषा, चेतनोज्जीवनायैव सृष्टिं, तथा च प्राचुर्येण सिद्ध्यन्ती लीला, अन्त प्रविश्य सकलचेतनाचेतन-धारणनियमनमोक्षप्रदानादिक परव्यूहविभवान्तर्याम्यर्चारूप पञ्चप्रकारावस्थितिं

च साङ्केतिहास-पुराण-मीमांसादिसाधनेन भागद्वयात्मकेन यथाभूतवादिना वेदेन। यथानिर्णयं च स भगवान् भूतभावनो नारायणस्स्वं रूपं दर्शयामास तस्मै ज्ञानचक्षुषे।

स तु योगिजनाग्रणीः यथादृष्टं भगवन्तं पुण्डरीकाक्षमाराधयन् ध्यान-योगेन [3]बृन्दारण्यक्षेत्रे, (तिरुवल्लिक्केणि) पार्थसारथिस्वामिसन्निधौ श्रीमत्-[4]कैरविणीतीरे यावत्सप्तशतं वत्सरानवात्सीत।

तदन्तरे च कस्मिंश्चिद्दिवसे भगवति भक्तिसारे निरन्तरभगवदनुभव-पुरस्सरं कन्था सीव्यति सति भवे च भवान्या सह वृषभाधिरूढे नभःपथेन बंभ्रम्यमाणे तस्य छाया स्वोपरि, पतन्तीमभृष्यमाणेन भक्तिसारेणापसृते किञ्चिदन्यत तद्दृष्ट्वा भवमाह भवानी— 'कोऽयम्! य एवमावामवमन्यते अवगत्य यास्याव' इति।

भवोऽब्रवीद्भवानीं—'नायमस्मान् गणयति वैष्णवोत्तमो दूरादेवापसरणं शरणमावयो' इति। तथाप्यनपनीताभिनिवेशाया तस्यां त्रिपुरान्तके च तथेत्यभ्युपगम्य योगिनस्तस्यान्तिकस्थितेऽपि सदारे, वदनमनुन्नमय्यैव सीव्यति कन्था तस्मिन्मुनौ प्रावर्ततैवं प्रश्नप्रतिवचनपरिपाटी तयो.।

भव — मध्यागत्य महादेवे पार्श्वस्थे तव सुव्रत।
किमुदासीनता युक्ता तपस्विजननिन्दिता॥

भक्तिसार — यद्यपि त्वं महादेव तपस्विजनकाङ्क्षितम्।
दर्शनं भवत. किन्तु नाहमर्थी कथञ्चन॥

भव — मैवं वादीद्भवान्योगिन्नह योगेश्वरो हर·।
न ममागमनं मोघं वृणीष्व वरमुत्तमम्॥

---

[3] ट्रिप्लिकेन्—मद्रास्। [4] पार्थसारथिसन्निधिपुरस्थितस्य सरसो नाम।

भक्तिसारः — यदि त्वं वरदः प्राप्तो वरार्हो यदि चाप्यहम् ।
योगेश्वरस्ततो मे त्वं देहि मोक्षं ममेप्सितम् ॥
भव: — मुने ! नारायणः श्रीमांस्तत्र शक्तो न मादृशः ।
भक्तिसारः — तर्ह्यद्य म्रियमाणं तु श्वो मारयितुमर्हसि ॥
भव. — मुने ! कर्मानुरूपं हि जीवितं मरणं तथा ।
भक्तिसारः — तर्ह्यस्याः पृष्ठतस्सूच्याः यथातन्तुर्विनिस्सरेत् ।
तथा वरं प्रदेहि त्वं वरदानकुतूहली ॥

इति भक्तिसारवचश्श्रुत्वाऽतीव क्रुद्धो भवः फालनयनानलेनैनमनङ्गस्येव दशा नयेयमिति निर्यद्धूमज्वालस्फुलिङ्गेन तार्तीयीकेन चक्षुषावैक्षत तम् । भार्गवो भक्तिसारोऽपि स्वदक्षिणचरणाङ्गुष्ठाधः स्थितया तादृश्यैव दृशा ददर्श फाललोचनम् ।

अनलयोस्तयोरन्योन्यस्पर्धाविवर्धमानयोः दग्धुं जगदिदमुद्यतयोः दह्यमाना देवा दिक्पालैस्सह ब्रह्मणा चाशरणाश्शरणमुपगम्य नारायणं तदादेशादाकाशावकाशमनवकाशं दर्शयद्भिस्तटित्पटलपरिमुष्टजनदृष्टिभिः स्तनितजनितजनताबधिरताकैः संवर्तसमयवर्षणसमुचितैः पुष्कलावर्तनामभिर्घनाघनैः स्वासारप्रशमितप्रलयकालानलज्वालाजालैः प्रशमितयोस्सतोः तादृशधारासारपराहतेऽपि गिराविव तस्मिन्नचलति विस्मित. पार्वतीपतिः 'भक्तिसार.' इति इदं प्रथमं नामधेयं तस्य निधाय, 'अंबरीषेणेव पुरा दुर्वासा इदानीमस्म्यवमानितोऽनेन । अजय्याः खलु वैष्णवाः' इति भवानीमभिभाषमाणो जगाम निजावासं कैलासम् ।

किंच तस्मिन् महामुनावारूढयोगे कदाचित् व्याघ्रारूढः कश्चन शुक्तिहारनामा खेचरस्तारापथेन सञ्चरमाणो हठात् स्ववाहने व्याघ्रे योगप्रभावादस्योपरि गन्तुमक्षमे तिष्ठति तत्रैव संभ्रान्तस्सर्वतो विलोक्य दृष्ट्वाधो भुवि

समाधिनियमितमनसं मौनिनमेनम्, अवतीर्य तूर्णमंबराद्वाहनाच्च भक्तिभाराव-नम्रो 'भगवन्! किमनया कन्थया धृतया? परित्यजैनां; गृहाणेदं दिव्याम्बर-निर्मितं कवचम्' इत्युक्त्वाऽदित्सत्कवचम्।

मुनिरपि निषिध्य तं तामेव कन्थां स्वयोगमहिम्ना नवरत्नचयचितं सहस्रकिरणमिव कवचमदर्शयत्। विस्मितस्तु नितरां स खेचरः त्रपावनम्रवदनः स्वकण्ठादवमुच्य हारम् 'अक्षमालात्वेन धारयेमं भगवन्कण्ठे' इति उक्त्वार्पयां बभूव। तदैव च महामुनौ स्वकण्ठस्थितां तुलसीनलिनाक्षमालिकां प्रदर्शयति सति, नवरत्नमालिकां तां दृष्ट्वा खेचरो निमग्नो विस्मयोदधौ। 'महानुभावस्य भवतो दर्शनात् कृतकृत्योऽस्मि' इति स्तुत्वा प्रणम्य प्रदक्षिणीकृत्य च यथागतं ययौ।

अन्यदा च योगावस्थिते तस्मिन् 'कोङ्कणसिद्धः' इति कश्चन सिद्धो रसवादे समुपगम्य मुनेरुपकण्ठं कोटिमेदिनीं रसघुटिकामस्मै दित्सन् निषिद्धश्च भक्तिसारेण स्वदेहमलघुटिका कोटिकोटिमेदिनीं रसघुटिकामुक्त्वा प्रदर्शिता दत्ता च गृहीत्वा परीक्ष्य च तथा भूतां दृष्ट्वा भक्तिसारं प्रणम्य भक्त्या 'धन्योऽहं भगवतो दर्शनेन' इत्युक्त्वा प्रपेदे स्वपदवीम्।

अथ च भगवति भक्तिसारे गिरिगुहां काञ्चन समाश्रित्य प्रत्याहृत-सर्वेन्द्रिये धृतश्वासे भगवन्निहितचित्तवृत्तिसन्ताने तदनुभवजनितपरमानन्द-तुन्दिलहृदम्बुजे पुलकितसर्वगात्रे भोग्यतया स्वरूपानुरूपतया च तत्रैव सन्तत-समाहितचित्ते, सरसिजमाधवीकुसुमकैरवोद्भवाः कासारभूतमहदाह्वयाः त्रयः प्रथमसूरयो भगवद्विभूत्यनुभवाय चेतनानुग्रहाय च तीर्थक्षेत्रमयीं भुवमभि-क्रामन्तो भगवतो भक्तिसारमुनेस्तपोविशेषजनितमतिमानुषं तेजःप्रसरं दूरा-दवलोक्य विस्मितचित्ताः मृगयन्तः तेजोनिदानं क्रमादागत्य गुहां दृष्ट्वा च

समाधिनिष्ठं भक्तिसारं तेन च विदिततदागमनेन वन्दिताः पृष्टाश्च कुशलं सफलयांचक्रुरन्योन्यं विधिवाक्यद्वयमिदम्—

'वैष्णवो वैष्णवं दृष्ट्वा दण्डवत्प्रणमेत् भुवि ।'

'आह्लादशीतनेत्राम्बुः पुलकीकृतगात्रवान् ।
सदा परगुणाविष्टो द्रष्टव्यस्सर्वदेहिभिः ॥' इति ।

अथ च ते चत्वारोऽपि मिथः पयः पयसेव मधु मधुनेवामृतममृतेनेव चैकरसा मिलिता निखिलेनापि प्रकारेण भगवन्तमनुभवन्तोऽत्यवाहयन् कञ्चित् कालकलापम् ।

ततस्तु ते चत्वारोऽपि गत्वा कुतूहलात् महदाह्वयावतारभूमिं मयूरपुरीमवलोकयन्तस्तदवतारकारणं कैरवकासारं तत्तीर एव योगनिरताः कानिचिदहान्यत्यक्षिपन् । त्रयस्तु ते प्रथमसूरयोऽनुमत्या मुनेर्यथापुरं प्रतस्थिरे पृथिवीपर्यटनाय यत्र सायंगृहाः ।

तदनु भक्तिसारेऽपि स्वावतारस्थानं विदेहभवनक्षेत्रं महीसारक्षेत्रमेत्य ऊर्ध्वपुण्ड्रधारणाय धरणीं खात्वा श्वेतमृत्स्नामनुपलभ्य चिन्ताक्रान्ते श्रीशैलेशः श्रीनिवासः स्वप्नेऽस्य समागत्य श्वेतमृत्स्नालाभस्थानं साभिज्ञानं ज्ञापयित्वा जगाम । प्रबुध्य भक्तिसारः तमेव प्रदेशं सप्रत्यभिज्ञं खात्वा लब्ध्वा शुद्धां मृत्स्नां धृत्वा तयोर्ध्वपुण्ड्राणि द्वादश कञ्चित्कालमुवास तत्रैव भगवदनुभवेन कालं यापयन् ।

कदाचिदादिसूरिषु प्रथमस्य भगवतः कासारमुनेरवतारस्थाने सत्यव्रतक्षेत्रे काञ्च्यां कञ्चित्कालं वस्तुमिच्छुस्तत्र गत्वा शेषपर्यङ्कशायिनं (यथोक्तकारिनामानं) श्रीभूनीलाविहारिणं भगवन्तं संसेव्य तत्र कासारयोगिनोऽवतारहेतोः कासारस्य तीरे वत्सरान् सप्तशतं भगवदनुभवनिरतो बभूव ।

तस्मिंश्च काले एतदनुग्रहजन्मनि विदुर इव प्राज्ञे कणिकृष्णे एतच्चरणप्रवणे सेवमाने च तं तत्रत्या काचन जरती भक्तिभरवती भक्तिसारे तद्वासभूमिं भूषयन्ती मार्जनगोमयानुलेपनरङ्गवल्ल्यादिभिः प्रत्यहमसेवत। कस्याचित्कालकलाया व्युत्थितो योगादवलोक्य किङ्करतानिरतां जरतीमतीव हृष्टः पृष्ट्वा तदिष्टं, तदनुरोधेन विधाय तां वृद्धां मुग्धां षोडशवर्षदेशीयामनुजग्राह।

तां च तरुणीं सुरसुतोपमां नरपतिरवलोक्य [5]पल्लवराजः पल्लवितमनोभवस्तत्कुसुमबाणबाधितस्तामनुनीय तदनुमत परिणीय बुभुजेऽतिमनुजान् भोगान्। क्रमेण च जराजर्झरितशरीरस्स राजा वरबलप्रतिपद्योपचीयमानयौवना तामुपभोक्तुमक्षमो ययातिरिव ययाचे पुनर्यौवनानयनोपायमात्मनस्तामेव। सा तु भक्तिसारकृपासारादापतितां ता तरुणता स्वस्या निवेद्य राज्ञे, 'त्वमप्यहमिव भक्तिसारपादसेवया सम्पादय यौवनम्। तत्र चायमुपाय.— योऽयमायात्यनुदिनं भवद्भवनं देहयात्रोपकरणोपादानाय 'कणिकृष्ण' इति कश्चिद्भागवतस्तमाश्रित्य तद्द्वारा तदाचार्यं भक्तिसारमाश्रय। तदनुग्रहेण सुग्रहमेतद्भविष्यति' इति प्रोवाच।

राजा तु कणिकृष्णमाहूयाब्रवीत् —'भवदाचार्यं मदालयमानय मानयितुं तत्पादवन्दनेनात्मानमुत्तारयितुं च' इति। स चोवाच —'न मदाचार्योऽन्यनिकेतनापवरकमपि प्रपद्येनाप्यधितिष्ठति। सुज्ञातभगवत्सार्वज्ञ्यादिगुणगणोऽज्ञजनपूज्यान्प्राज्ञो न मनुते तृणायापि' इति।

अन्यदा च पल्लवराजः कणिकृष्णमब्रवीत्—'भो! काव्यरचनया मां स्तुहि' इति। कणिकृष्णस्तूवाच —'भो! धरणीरमण! नारायणगुणगणरसज्ञयानयारसज्ञया दुर्जनबहुमान्यमज्ञं जन न स्तोतुमुत्सहे' इति। यदा मुहु-

[5] अद्यतनचारित्रिकपल्लवराजभिन्नोऽय प्राचीन।

मुहुरतिनिर्बध्यमानोऽपि कणिकण्णो नरपतिविषयं काव्यं निबद्धुं बद्धश्रद्धो न बभूव; भगवद्भागवतविषयमपहायाहङ्कारिचेतनास्तोतव्यत्वाध्यवसायहेतुभूतानि शिष्टानां वचनानि चोदाजहार ; तदा क्रुद्धेन राज्ञा 'मदीयं राज्यं प्राज्यमुत्सृज्य गच्छ' इत्याज्ञप्तस्तत्क्षणं रक्षःपतिनाधिक्षिप्तो विभीषण इवेक्ष्वाकुकुलनायकं कणिकण्णः प्राप्य भक्तिसारं यथावृत्तं निवेद्य राजादेशं देशान्तरं गन्तुं ययाचे अनुमतिं स्वाचार्यम् ।

स तु भक्तिसारोऽब्रवीत् — ' यदि त्वं देशान्तरं गमिष्यसि, नाहमत्र स्थास्यामि । यद्यहमितोऽन्यत्र गमिष्यामि, नात्र भगवाननन्तशायी शेष्यते । यदि भगवानिमं देशं जह्यात् परित्यजेयुस्तत्परिकरभूता ब्रह्मादयोऽपि देवाः । तदुत्थाप्य शेषशायिनं प्रस्थापयाम्यात्मना सह जनपदान्तरम् ' इति ।

ततश्च भगवतश्शेषशायिनस्सन्निधिमागत्य पुरस्स्थित्वा जगाद — ' भगवन् ! कणिकण्णो राजादेशाद्देशान्तरं गमिष्यति । अहमपि तदनुगामी भविष्यामि । त्वमपि भवतो नागशय्यां कक्षे निक्षिप्य मया सहायाहि । तदर्थमुत्तिष्ठ ' इति ।

भगवति च यथोक्तकारिणि कणिकण्णानुगामिना भक्तिसारेण सह प्रस्थिते देशान्तरं तत्तदालयस्थितासु प्रस्थितासु सर्वास्वपि देवतासु

" अपि वृक्षाः परिम्लानाः सपुष्पाङ्कुरकोरकाः ।
उपतप्तोदका नद्यः पल्वलानि सरांसि च ॥ " इति ।

रामविरहातुरायामयोध्यायामिव काञ्च्यामवसीदन्त्यामन्धकारप्रायेषु रात्रिन्दिवेषु उद्विग्नो राजा मन्त्रिणश्च किंकर्तव्यतामूढाः कथञ्चिन्निश्चित्यानुधावन्तः, 'ओरिरुक्कै' अथवा 'ओरिक्कै' इति ग्रामविशेषे कणिकण्णस्य पादारविन्दे गृहीत्वा दृढं स्वापराधान् कृतानुनयेन महता क्षामयित्वा तत्प्रार्थितेन भक्तिसारेण सहानाय्य काञ्च्यां यथापुरमवास्थापयन् ।

भगवान् भक्तिसारोऽपि पुनश्शेषशायिनं तन्देवमेवं प्रार्थयामास — 'भगवन् ! कणिकृष्णः प्रार्थितो राज्ञा संन्यवर्तत; काञ्चीमप्यधिवसति । तदनुगन्ताहमपि । भवानपि यथापुरं शेषशय्यामास्तृणातु शेतां च' इति । भगवानपि यथोक्तकारी ततः प्रभृति 'यथोक्तकारी' इत्येव नाम्ना ( शोन्नवण्णं-शेय्द पेरुमाळ् ) व्यवह्रियमाणः तज्ज्ञापनाय सर्वेषां पूर्वमुपधानीकृतदक्षिणशयो बभूव वामशयोपधानः । ततश्च 'अकालफलिनो वृक्षाः' इति पुनरपि रामागमनादयोध्यानगरीव सर्वतस्सुखिनी बभूव काञ्ची । एतादृशं भगवतस्सौलभ्यगुणमनुसन्दधान एव भक्तिसारः स्वप्रबन्धे तिरुचन्दविरुत्ताख्ये 'वेःकणैकिडन्द-देन्नीमैये' इत्यनुजग्राह । कञ्चन कालं तत्रैव समाहितचित्तोऽवसच्च ।

तदनु कुम्भघोणाख्ये ( तिरुक्कुडन्दै ) दिव्यक्षेत्रे सन्निहितं भगवन्तमपर्याप्तामृतं (आरावमुदाव्वार्) ससेवितुमनाः प्रस्थितो मार्गवशात् ( पेरुंपुलियूर् ) बृहद्व्याघ्रपुरीनामकं ग्रामं प्राप्य तत्र कस्यचित् गृहपतेः गृहबहिर्वितर्दिकायामासीनो विशश्राम । तत्र केचन वेदमधीयाना ब्राह्मणास्तस्मिन्मुनौ शूद्रधिया 'तस्माच्छूद्रसमीपेनाधीयीत' इति विधिमनुरुन्धाना विरेमुरध्ययनात् । अनन्तरमनन्तरवाक्यं सर्वेऽपि ते विसस्मरुः । परस्परमवालोकन्त केवलं मुखम् । तदा स मुनिस्तत्र विकीर्णान् कांश्चित् व्रीहीन् कृष्णानुंछित्वा नखैर्निर्भिद्य संज्ञापयतिस्म । ततस्ते ब्राह्मणाः 'कृष्णानां व्रीहीणां नखनिर्भिण्णम्' इति वेदवाक्यानुपूर्वीं स्मृत्वातीव विस्मिताः 'न शूद्रा भगवद्भक्ता विप्रा भागवतास्स्मृताः' इति महाभारतोक्तिरीत्या महानुभावोऽयं भागवत इति मत्वा महत्या भक्त्या प्रणम्य कृतार्था बभूवुः ।

अपरमिदमाश्चर्यं समजनि तस्मिन् ग्रामे, यस्यां यस्यां दिशि विशिखायामुपादानायायं विचरति, तस्यास्तस्या अभिमुखो बभूव तत्क्षेत्रमन्दिरवासी भगवानर्चारूपः । तदिदं चित्रं तदर्चकः केभ्यश्चित् ब्राह्मणेभ्यः प्रादर्शयत् ।

ते तु तस्मिन्नेव ग्रामे यजमानाय कस्मैचिन्न्यवेदयन्निममद्भुतं वृत्तान्तम् । स तु यजमानो भक्त्यागत्य तस्य मुनेस्सकाशं दृष्ट्वा च भक्तिसारस्य दिव्यं रूपम् आनीय निजां यागशालां धर्मात्मजो राजसूये विजयसखमजमिवाग्रपूजया मानयामास ।

ऋत्विजस्तु जगर्हुरेनं यजमानं 'यज्ञोऽयमज्ञेन त्वया भग्नो यन्निम्नोन्नतभावेन यस्य कस्यचित्सम्भावना व्यधायि ' इति शिशुपाल इव । तदानीं तु भगवान् भक्तिसारोऽमन्यत; 'नेदानीमात्मनो महिमानमप्रकाश्य क्षणमपि स्थेयं मया' इति । प्रादर्शयच्च तत्रत्येभ्यस्सर्वेभ्यस्स्ववक्षस्स्थले सहस्रफणामणिमण्डिते अनन्ते शयानं श्रीभूनीलादिभिस्सेव्यमानं विनतातनयसेनानायकादिभिस्सूरिभिरुपास्यमानं दिव्याभरणप्रहरणादिभिर्देदीप्यमानमपारमहिमानं श्रुत्येकमानं विष्वक्सेनम् ।

धृतराष्ट्रसभायां भगवतः पाण्डवदूतस्य विश्वरूपप्रदर्शनादद्भुतमिव दृष्ट्वाद्भुतमिदमानन्दजलधौ मग्ना भग्नाभिमाना भुग्नशिरसस्तत्पादयुगे जग्मुस्ते सर्वे तदनुग्रहमाद्रताम् । चक्रुश्च महामहं महतोऽस्य मुनेस्तस्मिन्नहनि हर्षेण ।

भक्तिसारस्तूपदिश्य तेभ्यस्तत्त्वं निर्गत्य तस्माद्ग्रामादासाद्य कुम्भघोणक्षेत्रं तत्र साक्षात्कृत्य कावेरीतीरविहारिणं शेषशायिनमपर्याप्तामृतमुवाच चैवं— 'काविरिकरैक्कुडन्दैयुळ् किडन्दवारेळुन्दिरुन्दु पेशु' । ' कावेरीतीरगतेऽस्मिन् कुम्भघोणक्षेत्रे तव शयनप्रकारमुत्थाय ब्रूहि' इत्यर्थकं पद्यम् ।

स तु भगवानपर्याप्तामृतस्तथैवोत्थानाय प्रयतमानः किञ्चिदुत्तस्थौ । सद्य एव भक्तिसारो 'वाळि केशने ! माभूदुत्थानं; यावत्कालं तवैतादृशसौलभ्यगुणवतो मङ्गलं भूयात्' इति प्रार्थयामास । तदद्यापि तत्र भगवान् शेषशयनादर्धोत्थित एव दृश्यते ।

ततो भगवान् भक्तिसारस्तादृशसौलभ्यप्रकाशिकाया अर्धोत्थिताया मूर्तेर्ध्यानेनैव त्रिशताधिकद्विसहस्रवत्सरानत्यवाहयत्। एवं सप्तशताधिकचतुस्सहस्रं वत्सरानत्रैव विभूतौ भगवदनुभवनिरतो भक्तिसारः 'नान्मुहन्तिरुवन्दादि' (= चतुर्थान्दयादिः; पद्यसंख्या ९६) 'तिरुच्चन्दविरुत्तम्' (पद्यसंख्या १२०) इति प्रबन्धद्वयमनुजग्राह जगदुज्जीवनाय।

प्रबन्धद्वये च सकलवेदान्तसारभूतरहस्यत्रयार्थास्सर्वेऽपि स्पष्टं प्रतिपादिताः; भगवदतिरिक्तस्य समस्तस्य हेयता तस्यैवोपादेयता सर्वस्मात्परतमतेत्यादयोऽनेके अर्थाश्च इति शुभम्।

इति [6]श्रीभक्तिसारमुनिचरितम्

[6] एष मुनिः प्रथमसूरित्रयस्य समकालीनः।

# श्रीशठकोपसूरिचरितम्

अस्ति किल दक्षिणस्यां दिशि भरतखण्डमण्डनायमानेषु पाण्ड्येषु जनपदेषु 'श्रीनगरी (आळ्वार् तिरुनहरि) इति प्रसिद्धा काचिन्नगरी ताम्रपर्णीनदीतीरे[1]। तत्र चासप्तपूरुषं भगवत्सम्बन्धपरिपूतः कश्चिद्वैष्णवसन्तानो बभूव। यं च सन्तानमलंचक्रुरेते भागवताः क्रमेण (१) तिरुवळुदिवळनाडर् (२) अरन्ताङ्गियार् (३) चक्रपाणियार् (४) अच्युतर् (५) शेन्दामरै क्कण्णर् (६) शेङ्गण्णर् (७) पोर्कारियार् (८) कारियार् (९) मारन् इति।

तत्र 'मारन्' इत्ययमेव प्रपन्नजनकुलपतिः, वकुलकुसुमभूषणः, शठारातिः, परांकुशः इत्यादि नामालङ्कारो मुनिवरः। तस्येदं चरितमद्भुतमेवमाख्यायते तज्ज्ञैः। पूर्वोक्तसंन्ताने योऽयं सप्तमः पोर्कारियार् नामा तस्य कारियार् नामा पुत्रोऽजनि। तस्य विवाहं कर्तुकामः पिता तिरुवण्परिशाराख्ये ग्रामे निवसन्तं तिरुवाळूमार्पनामानं सर्वतस्स्वसमानं प्राप्य तत्पुत्रीं उडैयनङ्गैयार् नाम्नीं कन्यां स्नुषार्थे वरयामास। सोऽप्युररीचकार। शुभे दिवसे मुहूर्ते च पाणिग्रहणमहोऽपि यथाविभवं प्रववृते। तदनु वधूवराभ्यां सह श्रीनगरीमाजगाम पिता।

एवं गृहस्थधर्मेस्थितः कारियार् नामा कदाचिद्भार्यया सह श्वशुरगृहमुपगम्य कतिचन दिवसानुषित्वा प्रतिनिवर्तमानो मध्येमार्गं तिरुक्कुरुंकुडिनंबिनामानं तत्रत्यं भगवन्तमर्चारूपं नमस्कृत्य प्रदक्षिणीकृत्य 'आवयोरेकमपत्यं देहि' इत्ययाचत। भगवानप्यहमेव भवतोः प्रजायेयेत्यर्चकमुखेनोक्त्वा तुलसीं प्रसादरूपेण ददौ।

---

[1] श्रीनगरी तिन्नवेल्लीतः तिरुच-दूरमार्गे वर्तते।

## ŚRĪ SAṬHAKOPASŪRI



श्रीशठकोपसूरि — नम्माळ्वार्

वृषभे तु विशाखायां कुरुकापुरि कारिजम् ।
पाण्ड्यदेशे कलेरादौ शठारिं सैन्यपं भजे ॥

# SRÌ MADHURAKAVI



श्रीमधुरकविसूरिः

मेये चित्तासमुद्भूतं पाण्ड्यदेशे गणांशकम् ।
श्रीपरांकुशसद्भक्तं मधुरं कविमाश्रये ॥

ततो दम्पत्योः श्रीनगरीमुपेत्य निवसतोः उडैयनङ्गैयार् अन्तर्वत्नी बभूव। क्रमेण च ववृधे गर्भः।

ततः कलौ अतीतेषु द्विचत्वारिंशद्दिवसेषु प्रमाथिनाम्नि अब्दे वैशाखे मासि शुक्लचतुर्दश्यां भृगुवासरे विशाखानक्षत्रे कर्काटकलग्ने अवततार पराङ्कुशसूरिरस्मदादिभागधेयभूतोऽस्मिन् भूभागे[2]। भगवाननन्तोऽपि वर्षातपादिवारणायोन्निद्रचिञ्चातरुरूपेण प्रथममेवावातरत्।

पराङ्कुशसूरेः शिष्यो मधुरकविसूरिरपि अष्टसप्तत्यधिकसप्तशतोत्तरत्रिषष्टिसहस्राधिकाष्टलक्षसङ्ख्याकेषु (८६३७७८) वत्सरेषु द्वापरयुगेऽतीतेषु ईश्वराब्दे मेषमासि चित्तानक्षत्रेऽवततार[2] पराङ्कुशसूरेरवतारात्पूर्वमेव बकुलभूषणभास्करोदयात्पूर्वमरुण इव।

अयं च मधुरकविसूरिः सामशाखाध्यायिपूर्वशिखब्राह्मणकुलोद्भवः तत्तत्कालेषु जातकर्माद्युपनयनान्तर्संस्कारसंस्कृतः चतुर्दशविद्यास्थाननिष्णातः कुमुदाख्यभगवद्गणेशांशसम्भूतः मधुरायोध्याकाशीप्रभृत्युत्तरदेशस्थितपुण्यक्षेत्रतीर्थयात्रापरो निर्जगाम स्वावासभूताद्दक्षिणदेशान्तर्गतात् तिरुक्कोळूरुनगरात्।

जातस्तु कारिसूनुः पराङ्कुशसूरिरितरशिशुरिव न रुरोद। न पपौ स्तन्यादिकम्। नैव विससर्ज मलमूत्रादिकम्। मौनं केवलमालम्बे। एवमपि नैव क्षीणो रुग्णो वा बभूव। तेजःपरमस्यानुदिनं ववृधे। तदिदमद्भुतमाकलय्यास्य पितरौ भगवति न्यस्तसमस्तभरौ द्वादशे दिवसे शङ्खतीर्थनिकटे ताम्रपर्ण्याः दक्षिणे तटे अर्चारूपेणावस्थितं पुण्डरीकदलामलायतेक्षणं शङ्खचक्रवरदाभयहस्तं श्रीभूमिभ्यां क्षणमप्यविरहितपार्श्वद्वयं नीलनीरदनिभगात्रं पीतवाससमाश्रितवात्सल्यजलधिं 'पोलिन्दुनिन्र पिरान्' नामानं भगवन्तमभिगम्य

---

[2] शठकोपसूरेरवतारकालः क्रिस्तपूर्वं ३१०२। मधुरकवेस्तु क्रिस्तपूर्वं ३२२४।

पुरःशिशुं प्रदर्श्य ' मारन् ' इति नामधेयं विधाय तस्योन्निद्रचिञ्चातरोः अधस्तादान्दोलिकां बध्वा शाययित्वा अनितरसाधारणीं प्रतिपत्तिं बबन्धतुस्तस्मिन् ।

सोऽपि शिशुराषोडशाब्दात् तिन्त्रिणीमूल एव दृश्याभावान्निमीलितनयनः संभाष्याभावादवलम्बितमौनः अन्तर्मुखो जडमूकान्धबधिरवदवतस्थे । अविदिततन्महिमानौ पितरौ तु व्यषीदतामतीव ।

एवं स्थिते औत्तरतीर्थक्षेत्रयात्रायै प्रवसितो मधुरकविसूरिः कस्याञ्चित् रात्रावयोध्यावस्थितो जलविसर्जनजनिताशुचिभावनिवृत्तये शयनादुत्थितो दक्षिणस्यां दिशि दूरतो ददर्श महान्तं तेजोराशिमप्राकृतं युगपदुदितबहुदिनकरसदृशम् । विस्मितश्च बहुविचिन्तयन्नप्यनधिगततत्त्वः पुनरपि यथापुरं शिश्ये ।

एवं द्वितीयस्यां तृतीयस्यामपि निशायामुत्थाय तस्यामेव दिशि तथाविधमेव तत्तेजो दृष्ट्वा अतिकुतूहली तत्तत्त्वनिर्णयाय प्रत्यहं दिवाशयो निशाप्रयाणः तामेव दिशं तत्तेजोऽभिमुखो ययौ । क्रमेण प्राप्य श्रीरङ्गक्षेत्रं तत्रापि तथैव पश्यन् श्रीनगरीमवाप । तस्यां स्थितो रात्रावुत्थाय तद्दक्षिणतो नापश्यत्तत्तेजः । ततो निश्चिकायात्रत्यमेव तत्तेजो भवितुमर्हतीति । तदनु विचार्य तत्रत्यं विशेषवृत्तान्तं ज्ञात्वा गत्वाचोन्निद्रतिन्त्रिणीतरुमूलं दृष्ट्वा च तत्र पद्मासनोपविष्टं बिभ्रतं ज्ञानमुद्रां मुकुलितनयनं मौनिनं तेजोराशिमेवमचिन्तयत् —' किमयमन्धो बधिरो मूको जड उन्मत्तो वा यतो बाह्येन्द्रियव्यापारसामान्यशून्यः ' इति ।

तदनु चैतस्य चैतन्यपरीक्षायै गण्डोपलमेकं तत्पुरःशिलायां बलात् न्यपातयत् । तच्च शब्दं श्रुत्वा आकस्मिकमुन्मील्य लोचने ददर्श मधुरकविम् । ततोऽस्यामूकत्वनिर्णयायापृच्छदेवं मधुरकविः —' मृतस्योदरे यदि सूक्ष्मो

जायेत, तर्हि किं भुक्त्वा कुत्र तिष्ठेत् ? ' इति । तस्योत्तरमेवमुवाच पराङ्कुश-सूरिः —' तदेव भुक्त्वा तत्रैव तिष्ठति ' इति । अस्यार्थः — शेत्तचिन् = मृतप्राये अचेतने शरीरे, शिरियद् = अणुर्जीवः, पिरन्दाल् = अचिदात्मकशरीर-संयुक्तश्चेत्, एत्तै तिन्न् एङ्गे किडक्कुं = किं भुक्त्वा कुत्र तिष्ठेत् ? इति । उत्तरं तु — अत्तै तिन्न् = अचेतनभूतशरीरजन्यसुखदुःखे भुञ्जानः, अङ्गे किडक्कुं = शरीर एव बद्धो वर्तते,— इति च ।

तत् श्रुत्वा मधुरकविः ' महानुभावोऽयं ज्ञानिनामग्रणीः ' इति मत्वा ' अस्यैव समाश्रयणमुज्जीवनोपायः ' इति च निश्चित्य हृष्टः साष्टाङ्गं प्रणम्य तच्चरणयोः स्वकरणत्रयमपि तत्प्रवणं कुर्वाणोऽन्ववर्तत तम् ।

एवं स्थिते भगवान् परमपदनिलयः परवासुदेवः पतगपतिमारुह्य दिव्याभरणायुधाम्बरतुलसीमालाधरः स्वमहिषीजनपरिवृतः परिजनपरिच्छद-सेवितः कनकगिरिशिखरविहरदचिररुचिरुचिरो नवजलधर इवास्य कारिसूनोः पुरः प्रादुरभूत् । अवालोकत चैनमाकस्मिककरुणालहरीशिशिरेण विलोचनेन । येनायमपगतसमस्तरजस्तमस्सम्पर्कः शुद्धेन सत्त्वगुणेनाविष्टः तत्त्वहितपुरुषार्थादि-विषयेषु अज्ञानान्यथाज्ञानविपरीतज्ञानसंशयाप्रामाण्यज्ञानगन्धरहितः, लब्धभक्ति-रूपापन्नज्ञानः साक्षात्कृतभगवत्स्वरूपरूपगुणविभूतिः, तदनुभवजनितप्रमोदपूर-परीवाहमिव प्रावर्तयत प्रबन्धचतुष्टयं वेदचतुष्टयसारार्थप्रतिपादकम् ।

तत्र ऋग्वेदः तिरुविरुत्तम् ( पद्यसंख्या १०० ) अभूत् । यजुर्वेदः तिरुवाशिरियम् (प. सं. ७) । अथर्ववेदः पेरियतिरुवन्दादिः (प. स. ८७) । सामवेदस्तु (सहस्रगाथात्मकः) तिरुवाय्मोऴि (प. सं. ११०२) । तस्मिंस्तुरीये प्रबन्धे कारिसूनुर्भगवतः स्वरूपरूपगुणविभूत्यादिकं साक्षात्कर्तुमाकाङ्क्षते । काङ्क्षानुगुणं च साक्षात्करोति । साक्षात्कारजनितानन्दतुन्दिलः एतादृश-साक्षात्कारयोग्येष्वपि सर्वचेतनेषु, निरन्तरतापत्रयाभिहतांस्तानवलोक्य जातदयो

हितमुपदिशति । तेषां शब्दादिविषयप्रवणतया निरर्थके सत्युपदेशे स्वानुभवविच्छेदादनुतप्तचित्तः भगवदनुभवविच्छेदरूपभगवद्विश्लेषमसहमानः, श्रिया सह स्वस्यापि साम्यषट्कवत्तया भावनावशान्नायिकात्वमापन्नो दूतान् प्रेषयति भगवत्सकाशं तदानयनाय पक्षिप्रभृतीन् । अनागते तस्मिन् स्वदुरवस्थां निवेदयति स्वमात्रे सख्यै च । यदा स्वस्यात्यन्तावसादादिन्द्रियादिव्यापारशून्या भवति तदा तन्मातृतादात्म्यभावनया सखीभावभावनया वा तत्तत् तादात्म्यमापन्ना नायिकाया दुरवस्थां बोधयति पौरवधूजनेभ्यः । एतादृशनायिकादुरवस्थादर्शनात् सर्वज्ञस्सर्वशक्तस्सर्वस्वामी परमदयालुराश्रितवत्सलः संश्लिष्यति नायिकाम् ।

तदनु भगवदनुभवरूपतत्संश्लेषजनितपरमानन्दपरिपूर्णमानसो 'मत्सदृशो न कश्चिद्विभूतिद्वितयेऽप्यस्ति' इति कथयति स्ववाचैव । मुहुर्मुहुर्भगवतः कृष्णावतारकृतनवनीतचौर्यतन्मातृकृतबन्धनताडनादिजनितरोदनादिसौलभ्यातिशयानुभवेन विलीनचित्तो मूर्च्छति षण्मासान् त्रिवारम् । पुनरप्यस्मादृशां भगवतो वा भागधेयवशात् मूर्च्छाया उत्थाय संसारिचेतनोपदेशं कृत्वा तेन च भगवद्विश्लेषं तज्जनितं दुस्सहं दुःखं, दुःखासहिष्णुना भगवता कृतं संश्लेषं तेन च निरतिशयं सुखञ्च स्वस्य मुहुर्मुहुः कथयन् उभयधापि तदेकचित्तः परव्यूहविभवान्तर्याम्यर्चारूपं भगवन्तमनुभूय परभक्तिपरज्ञानपरमभक्तिरूपस्वज्ञानपरिपाकं प्रकटयन् प्रबन्धान्ते देशविशेषावस्थितस्य सायुधभूषणमहिषीपरिजनपरिच्छदस्य भगवतः परवासुदेवस्य निरन्तरानुभवं तज्जनितप्रीतिकारितकैङ्कर्यरूपपरमपुरुषार्थलाभञ्चापुनरावृत्तिं प्रतिपादयति ।

एतादृशमहिमवतः पराङ्कुशसूरेः शिष्यभूतो मधुरकविः प्रावर्तयत तत्प्रबन्धान् यथायाप्यस्मादृशा अपि तत्प्रबन्धसंबन्धेन पराङ्कुशसूरिसंबन्धमवाप्योज्जीविता अभूम । यथा शठकोपस्य कृष्ण एव धारकपोषकभोग्यादिकं

सर्वमभूदथैव मधुरकवेः स्वाचार्यः पराङ्कुशसूरिरेव सर्वमभूत् । इयमेव हि चरमोपायनिष्ठा । इयमेव निष्ठा स्वाचार्यस्य पराङ्कुशसूरेरत्यन्तामिमतेति 'पयिलुंशुडरोळि' 'नेड्डमाल्कडिमै' इति दशकद्वयोपदेशादवधृता । तामेव निष्ठां स्वस्य प्रतिपादयन्नयं मधुरकविः 'कण्णिनुणुशिरुत्ताम्बु' इति प्रबन्धमेकादशपद्यपरिमितमनुजग्राह पञ्चमोपायनिष्ठानामुज्जीवनाय । यस्य प्रबन्धस्य महिमैवं जोघुष्यते—'गाथाचतुस्सहस्रात्मके दिव्यसूरीणां दिव्यप्रबन्धे कालवशात् प्रमुषिते नाथमुनिराचार्यवर्यः एनमेकादशपद्यमितं प्रबन्धमात्रमधीत्य शठरिपुसूरेरर्चारूपस्य पुरः एकासनोपविष्टः द्वादशसहस्रवारं जपित्वा तं साक्षात्कृत्य तदुपदेशादेव गाथाचतुस्सहस्रात्मकं प्रबन्धकदम्बकं कण्ठगतमकार्षीत्; परम्पराप्राप्तं यदद्याप्यस्मदादिभिरपि पठ्यते' इति । किञ्च—कारिसूनुसूरेरर्चारूपं तत्रैव तिन्त्रिणीतरोरधः प्रतिष्ठाप्य नित्योत्सवादिसंवत्सरोत्सवान्तं व्यरचयत्, येन सकलचेतनानामुज्जीवनं भवत्यद्याऽपि ।

अपि च,— कारिसूनुसूरेरुत्सवसमयेषु अयं मधुरकविः स्वाचार्यस्य विरुदावलीं पठन् कैश्चित् शिवभक्तैः द्राविडप्रबन्धनिर्माणचणैरुपरुद्धः, 'यदि भवदाचार्योऽस्मत्सङ्घनेतारं काव्यविवादे जित्वा जयसूचिकां फलकामारोहेत्तर्हि विरुदावलीमर्हति; नो चेन्न' इत्यभाणि । मधुरकविरयमेवमवदत्—'अर्चारूपः अस्मदाचार्यस्तत्रागन्तुं फलकामारोढुञ्च नार्हत्येव । तत्सूक्तिं काञ्चित्पत्रे विलिख्य फलकामारोपयिष्यामः । यदि फलका धरिष्यति सूक्तिपत्रं तदा यूयं जिता एवेति मंस्यामहे' इति । ते तथैवेत्यभ्युपागच्छन् ।

अयमपि शठारातिसूक्तिं पत्रे विलिख्य फलकामारोपयामास सर्वसमक्षम् । सा च फलका कारिसूनुसूरिसूक्तिपत्रमेकं विना स्वारूढान् लब्धप्रशस्तीन् त्रिशतं कवीनपि पातयित्वा तत्पत्रमेकमेव बभार । एतदद्भुतं दृष्ट्वा सर्वैस्समं कविभिर्भीत्या स सङ्घनेता लज्जितश्चैवं शठारातिं तुष्टाव ।

" किं मक्षिकापि डयते विनतासुताग्रे
खद्योत एति पुरतः किमु भास्करस्य ।
श्वा द्वीपिनः पुरत एति भवन् कथं वा
कण्ठीरवस्य पुरतः किमु जम्बुकोऽपि ॥ १ ॥

यद्वोर्वशीममिनटत्यपि कापिशाचः
किं कारिसूनुकवितापुरतोऽपि सन्ति ।
काव्यान्तराणि ! जगति प्रथितानि तानि
सत्यं समुद्रघुषितानि विचिन्तितानि ॥ २ ॥ " इति ।

एवं मधुरकविस्स्वाचार्यमहिमानं प्रकटीकृत्य आचार्यनिष्ठां जगति प्रकाश्य ततस्स्वाचार्यपदकमलयुगलीमवाप ।

इति श्रीशठकोपसूरिचरितं मधुरकविसूरिचरितञ्च

# श्रीकुलशेखरचरितम्

अस्ति किल भरतखण्डे केरलेषु कुक्कुटकूटनाम्ना प्रथिता देशभाषया 'तिरुवञ्चिकळम्' इति काचन नगरी। तत्र च शेराख्ये क्षत्रियकुले अवततार भगवतः कौस्तुभांशः श्रीकुलशेखरनामा नरपतिः।

यस्मिंश्च दिवसे स महानुभावो भुवमलंचकार, स तु कलौ अतीतेषु हायनेषु सप्तविंशतिसंख्याकेषु पराभवनाम्नि वत्सरे (क्रिस्तपूर्वं ३०७५) कुम्भमासि शुक्लद्वादशीयुतो गुरुवासरः पुनर्वसुमहितश्च।

स च कुलशेखरो जायमानकालजातजनार्दनकटाक्षजनितनिखिलतत्त्वज्ञानः, जनक इव विजितनिजेन्द्रियजातः समुज्झितनिजाभिमानो जगतीवलयं केयूरमिव बभार निजभुजेन।

यस्मिंश्च राजनि निजभुजबलविजितनिखिलभूभुजि रक्षति क्षोणीमनुज्झितनिजधर्माः परस्पराभिजातप्रीतयो न जघ्नुरितरेतरं प्रजाः।

विविधकार्यकलापपर्याकुलामपि राज्यधुरां भगवति न्यस्तसमस्तभरो बभारातिलघ्वीम्।

एवमपि सकलपरिजनपरिच्छदपरिवृतस्य तस्य सिंहासनाधिष्ठानमपि भगवद्विरहस्य हुतवहज्वालापञ्जराधिष्ठानमिव व्यभात्।

प्रवेणीपरिष्कृत-मदमुदित-मतङ्गजस्कन्धाधिरोहणमपि निशिततरशूलशिखरारोहणमिव स मेने।

परन्तु सन्ततमन्तन्यमानभगवदनुभवसमेधितउत्तदमिमततमश्रीरङ्गक्षेत्रयात्रोन्मुखो घोषयामास प्रत्यहं रङ्गयात्राम्।

किञ्चायम् 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति वचनानुरोधेन निखिलवेदान्तवेद्यपरतत्त्वनिर्णयाय प्रत्यहमितिहासश्रेष्ठं श्रीरामायणं परतत्त्वनिर्णेतृभ्यः परमसात्त्विकेभ्यः प्रोच्यमानमशृणोत् ।

एवं स्थिते क्रमप्राप्तं—

"चतुर्दशसहस्राणि रक्षसां भीमकर्मणाम् ।
एकश्च रामो धर्मात्मा कथं युद्धं भविष्यति ॥

— रामायणे ३–२४–२३

इति श्लोकार्थं यदायं शुश्राव, तदा निरतिशयरामभक्तिभरपरवशः पुरातनमपि तदितिवृत्तं तदातनं भावयन् स्वयमप्यायोधने दाशरथिसाहाय्यबद्धश्रद्धः सन्नद्ध कार्मुकबाणगदासिचर्मादिप्रहरणपरिकर्मितः चतुरङ्गिणीमपि सेनां सन्नाह्य प्रस्थाप्य च निर्जगाम सहसा नगर्याः ।

तदनु विचिन्त्य धिषणमनीषास्सचिववराः तदुद्यमं मातरिश्वनि मुष्टिप्रहारायासमिव विफलमपहासास्पदमप्रतीकारं च, तेषु इतिहासश्रावकेषु अन्यतमं तरुणं त्वरितं प्रस्थाप्य राजाभिमुखं राघवविजयशंसिने

"तं दृष्ट्वा शत्रुहन्तारं महर्षीणां सुखावहम् ।
बभूव हृष्टा वैदेही भर्तारं परिषस्वजे ॥"

— रामायणे ३–३०–३९

इति श्लोकार्थं श्रावयामासुः । तं च श्रुत्वा रामविजयं स्वानीकिन्या सह सहर्षं न्यवर्तत नगराभिमुखं राजा कुलशेखरः ।

एवमादीनि लोकदृष्टिविरुद्धानि राज्ञश्चरितानि निरीक्ष्य नीतिपथनिष्णाताः विपश्चितः तस्य सचिवाः भगवद्गुणानुभवसहकारिभक्तजनसहवासजनितमेनमनर्थमाशङ्कमानाः तत्सहवासविघटनाय राज्ञो नित्याराध्यस्य देवस्य

## ŚRĪ KULAŚEKHARASŪRI



श्रीकुलशेखरसूरिः

कुम्भे पुनर्वसौ जातं केरळे कोळिपट्टणे ।
कौस्तुभांशं प्रपद्येऽहं राजानं कुलशेखरम् ॥

# ŚRĪ VIṢṆUCITTASŪRI



श्रीविष्णुचित्तसूरि — पेरियाऴ्वार्

मिथुने स्वातिजं विष्णुरथांश धन्विन पुरे।
प्रपद्ये श्वशुर विष्णो विष्णुचित्त पुरश्शिखम्॥

रत्नमयं हारमपहृत्य तत्सद्वानुभूतिषु परमसात्त्विकेषु भागवतेषु तदपहारित्व-मुदपादयन् ।

आकस्मिकसर्वेश्वरकटाक्षप्रत्यक्षितसकलवृत्तान्तस्स नरपतिः प्रतिक्षिप्य स्वामात्यवचनानि, तद्भक्ततां भागवतजनपरिशुद्धतां च सकललोकविदितां कर्तुमहितुण्डिकगृहीतं स्फटाटोपमीषणं महापुरुषव्यामाधिकपरिमाणं निश्वसन्त-मतिदीर्घमाशीविषमन्तः प्रवेश्यानीतं कमपि कनककुम्भं संसदि सन्निधाप्य तदन्तः स्वपाणिं प्रसार्य जग्राह भुजङ्गमम् ।

तादृशोऽपि स भुजङ्गमः कलशाद्बहिरुद्धृतोऽपि निर्विषो राजिल इव सङ्कोचितफणः सुकुमारकुसुमविरचितस्रगुपमोऽदृश्यत ससदा ।

तदा तु राजोवाच — "भो भो मन्त्रिवराः ! हारापहाररूपोऽयं व्यापारो हरिपरिचरणरतैर्न विरचितः । अपितु तत्परिपन्थिभिर्युष्माभिरेव । तदेतदुभयमपि सत्यमेव ; यतोऽयं भुजङ्गमः स्रगिवाचरति मद्भुजयोः । घटसर्पदीव्यमेतत् । एवंविधेषु निस्साक्षिषु व्यवहारेषु सत्यासत्यपरीक्षायै प्राड्विवाकेन करणीयान्येवमादीनि; यदुच्यते छान्दोग्ये स्तेयपरीक्षायै—

'स यदि परशुं तप्तं प्रतिगृह्णाति स दह्यतेऽथ हन्यते, स न दह्यतेऽथ मुच्यते इति ' " इति ।

अथामात्याः स्वदुराचारप्रकटीकरणात् साध्वसध्वस्तस्वान्ताः विकृत-मुखाः प्रणम्य नरपतये ' क्षम्यतामयमेकोऽपराधः ' इति संप्रार्थ्य भगवतो हारं पुरो निदधिरे ।

ततोऽयं महानुभावो भगवते हारं समर्प्य भगवदनुभवविच्छेदकरं राज्यभरं स्वतनूजे संक्रमय्य सुचिराभिलषितां स्वनगरनित्योद्घुष्टां रङ्गयात्रां तदनुष्ठानेनैव सफलयामास ।

ततश्च प्रकृतिमण्डलमिव केरलमण्डलं विहाय अर्चिरादिनेव पथा प्रस्थाय नित्यविभूतिमिव चोलावनिं निषेव्य विरजामिव कवेरजां समुत्तीर्य अपराजिताभिधानां दिव्यनगरीमिव श्रीरङ्गनगरीमुपेत्य सप्रदक्षिणं सप्रणामं च दिव्यास्थानमण्डपमिव श्रीरङ्गविमानं प्रविश्य परवासुदेवमिव श्रीरङ्गनाथं समनुभूयापादचूडं तदनुभवजनितप्रीतिकारितसर्वसपर्यासाम्राज्यमन्वपद्यत परमसाम्यापन्नो मुक्त इव ।

अयमपि महानुभावो निजविविधभगवदनुभवपरीवाहरूपं पञ्चोत्तरशतपद्यपरिमितं 'पेरुमाळ् तिरुमोळि' इति प्रसिद्धं द्राविडभाषामयं प्रबन्धं प्रकटय्य जगदिदमुदजीवयत् ।

तत्र प्रथमदशके सर्वैरपि स्वबाह्याभ्यन्तरकरणैरवयवैः देहेन च भगवतः श्रीरङ्गनेतुरनुभवं कदाकदेति प्रार्थयत ।

द्वितीयदशके, न केवलपरमपुरुषानुभवजनितकिङ्करता परमपुरुषार्थतां भजते; अपितु तत्काष्ठाभूता तदीयकिङ्करता; अतो भागवतचरणाम्बुरुहपरागपांसुलतामात्मनस्सर्वाङ्गीणां संभावयामास ।

एवं भागवतकैङ्कर्यपर्यवसन्नभगवत्कैङ्कर्यरूपपरमपुरुषार्थमनोरथसत्त्वेऽपि रजस्तमःप्रचुराणां देहात्माभिमानिनां विषयप्रवणानां अनात्मज्ञानां सहवासे तादृशमनोरथस्यापि अकिञ्चित्करत्वापत्त्या तादृक्पामरजनसहवासानभिरुचिं भगवदेकप्रावण्यं च स्वस्य प्रकटीचकार तृतीयेन दशकेन ।

तुरीयेण तु पूर्वानुभूतः श्रीरङ्गनाथ एव स्वस्य प्रतिबन्धकनिवृत्तये कैङ्कर्याङ्गीकरणाय च श्रीवेङ्कटाचलेऽपि संनिधत्ते इति तदधीशं श्रीनिवासं शरणमुपगम्य कैङ्कर्यरुचिं तत्र त्वरां च प्रकटयन् तत्रैव तिर्यक्स्थावरादिजन्मानि प्रार्थयामास ।

पञ्चमे दशके भगवदेकोपायस्य स्वस्यानन्यगतित्वमनेकैः निदर्शनैः व्यजिज्ञपत् वित्तुवक्कोट्टुनायक (उय्यवन्दपेरुमाळ्) सन्निधौ ।

अथ च, अतिक्रान्तज्ञानदशः विपाकापन्नप्रेमदशामारूढः गोपिकातादात्म्यभावनया स्वयमपि कृष्णलीलासमासक्तवल्लवीजनो भूत्वा तमेव बहुसुखमनुभवति स्म षष्ठे दशके ।

तदनु निरतिशयभोग्यभूतमेतादृशं वस्तु यावता कालेन नानुभूतं तावते कालायानुतप्यमानो यशोदानुभूतां श्रीकृष्णबाललीलामनालोकितवत्याः कृष्णजनन्याः देवक्याः प्रलापप्रकारान् प्रकटीचकार तादात्म्यात् सप्तमे ।

अष्टमे च कौसल्यातादात्म्यापन्नोऽयं बालं रामं डोलामारोप्य लालयति स्म आन्दोलनेन ।

नवमे तु, राज्याभिषेकाय प्रतिसरमाबध्य श्वोभूते वनवासाय प्रस्थापितस्य रामस्य विश्लेषव्यसनमसहमानो दशरथो भूत्वा तादात्म्यात् आक्रोशति स्म ।

दशमदशकेन तु रामभक्तोऽयं रामायणस्य काण्डसप्तककथाः अन्ववादीत् ।

किं च, संस्कृतभाषयायं मुकुन्दमालानाम्नीं अनिललिलपदगुम्भितां सुप्रसन्नार्थां भगवतो नारायणस्यैव सर्वस्मात्परताप्रतिपादिनीं भक्तिरसनिष्यन्दिनीमिदानीमप्याबालगोपालमा च महुविद्धोऽनुसन्धीयमानां स्तुतिं जगदिदमुज्जिजीवयिषुर्निजगाद ।

## इति श्रीकुलशेखरचरितम्

# श्रीविष्णुचित्तचरितम्

यश्श्रीधन्विपुरे वटच्छदशयस्यारामकृत् सत्कृते
तस्याज्ञामधिगम्य पाण्ड्यनृपतेर्विद्वत्समामध्यतः ।
शास्त्रितत्त्वविनिश्चयं विरचयन्विद्याधनं प्राप्य त-
न्मत्येभे स्तुतिमातनोद्भगवतस्तं भट्टनाथं भजे ॥

अथ तत्रभवान् विष्णुचित्तसूरिः श्रीभरतखण्डदक्षिणसीमाभरणायमान-पाण्ड्यजनपदमण्डनभूतायां श्रीधन्विनूतनपुर्यां (श्रीविल्लिपुत्तूर्) सकल-संपदन्वितायां कलौ अतिगतेषु षट्चत्वारिंशद्गणनेषु (क्रिस्तपूर्वं ३०५६) हायनेषु क्रोधनाभिधेऽब्दे मिथुनराशिमाक्रामति सवितरि वलक्षे पक्षे हरिवासरे भास्करवासरपरिष्कृते स्वातीमुपगते कलानिधौ अवततारावनौ नारायणवाहनांशेन अस्मद्विधतापत्रयाभिहतोज्जीवनाय ।

ततश्च स भगवान् विष्णुचित्तः तन्नगरमणिदीपायमानेन भगवतार्चा-रूपिणा वटपत्रशायिना (वडपेरु कोयिलुडैयान्) निर्निदानमेव करुणया कटाक्षितः 'प्रह्लादो जन्मवैष्णवः' इतिवत्सततविष्णुचित्तः सहजदास्यरस-परिपूरितः ततोऽभ्यर्चणाय मन्यमानः कैङ्कर्ये पुरुषार्थेऽपि स्वस्वाम्यभिमतस्यैव तस्य पुरुषार्थतमत्वात् तन्निर्णयायैवं व्यचारयत् स्वान्ते ।

"भगवान्परमपदनिलयः परवासुदेवः सनकसनन्दनचतुराननादीनामवा-ङ्मनसगोचरः स्वसजातीयेभ्यः अस्पृष्टसंसारगन्धेभ्योऽनन्तगरुडविष्वक्सेनादिभ्यो नित्येभ्यो मुक्तेभ्यश्च आज्ञापयति स्वाभिमता परिचर्याम् ।

व्यूहरूपी च पय पयोधिशयस्तदा तदा तच्चहितिजदनुजपरिपीडित-विधिशिवशतमखप्रमुखबर्हिर्मुखनिकरपरिदेवनरववधिरितश्रुतिविवरो मुहुर्मुहुः

शयितुमप्यनवाप्तावसरः तत्तदभयदानदीक्षाधुरिणैः धीरध्वनिभिरेव कालं क्षिपति । स्वपरिचर्यानुशासनस्य का वार्ता !

विभवावतारस्तु स्वामी मनुजसजातीयसंस्थानमात्रावगतमानुषभावेषु अवजानत्सु मानवेषु स्वात्मानमजहत्परस्वभावं कस्मै बोधयतु स्वाभिमत-स्वसेवाकरणाय । तथाऽपि भूभारावतारणापदेशेन देवकीवसुदेवमनोरथपूरणाय चतुर्भुजोऽवतीर्य अवमोच्य तन्निगलबन्धं नवनीतचौर्योलूखलबन्धनस्वाश्रित-पाण्डवदूत्यसारथ्यादिभिः सौलभ्यप्रकाशकैः शैशव एव पूतना-शकट-यमला-र्जुनतृणावर्तधेनुकारिष्टकेशिकुवलयापीडमल्लकंसाद्यसुरवरमर्दनादिभिः गोवर्धनो-द्धरणादिभिश्च परत्वप्रकाशकैः स्वस्यैवसिद्धोपायत्वप्रकाशकैश्चातिमानुषैः अत्यद्-भुतैश्चरितैश्चित्तापकर्षके कृष्णावतारे धनुर्दर्शनापदेशेन कंसवधाय तद्भवनं व्रजतः पथि मालाकारभवनप्रवेशः तत्र च स्वदिव्यमङ्गलविग्रहानुगुणदिव्य-माल्योपयाचनं, तेन च धन्यंमन्येन निरतिशयभक्तिपुरस्सरं समर्पितानि माल्यानि धृत्वा स्वाङ्गेषु स्वात्मानमालोक्य हृष्यतो वल्गनं च बोधयत्येवास्मान् स्पष्टतरं दिव्योद्यानकरणमाल्यग्रथनतत्समर्पणानि विना नान्यदभिमतं कैङ्कर्यं भगवतः इति " इति ।

निर्धार्य चैवं तदनुगुणमेव कुसुमोद्यानं निर्माय तत्रोपारूढैस्तुलसी-मल्लिका-कुन्द-वासन्ती-मालती-पाटली-केसर-पुन्नागचम्पकप्रभृतिभिर्नानागन्धवर्णैः सुमनोभिः विचित्राणि माल्यान्यारचय्य समर्प्य च प्रतिदिवसं वटदलशायिने भगवते निरतिशयं प्रमोदमादधान एवासीत् ।

एवं स्थिते दक्षिणमधुरायामतिधार्मिके वल्लभदेवनाम्नि पाण्ड्यराजे अन्वर्थनामनि शासति वसुन्धरां स राजा कस्मिंश्चिन्निशीथे नगररक्षाधिकृतानां रक्ष्याणाञ्च प्रकृतीनां परीक्षणाय कृतवेषपरिवर्तो नगरवीथ्यां निगूढं पर्यटन् कस्याञ्चित् गृहबहिर्वितर्दिकायां प्रसुप्तं कञ्चन प्रबोध्य द्विजन्मानं पृष्ट्वा, तेन

चोक्ते 'गङ्गामवगाह्य श्रीरामसेतौ सिष्णासुः कश्चन विप्रोऽहं पान्थोऽत्र शये' इति, पुनः प्रपच्छ — 'यद्यपि भूदेवोऽसि तीर्थयात्रापरः श्रोत्रिय इवाभासि; अतश्च भवदभिमतं सारतमं कञ्चन श्लोकं पठ' इति ।

स ब्राह्मणो जगाद—

'वर्षार्थमष्टौ प्रयतेत मासान् निशार्थमर्धं दिवसं यतेत ।
वार्धक्यहेतोर्वयसा नवेन परत्रहेतोरिह जन्मना च ॥' इति ।

आकर्ण्य चैतत्पद्यं राजा व्युत्पन्नो भावयामासैवं श्लोकार्थम् —'यैः परिकरैः संपन्नेन यावदेकं संवत्सरं सुसुखं जीवितुं शक्यं पुंसा तावतः परिकरानष्टभिर्मासैरुपार्जयेत् । यस्य दिवसस्य रात्रौ सुखेन स्थेयं तत्कृते तस्य दिवसस्य पूर्वार्धभाग एव यतितव्यम् । वार्धके सुखजीवनायावश्यकं सर्वं परिकरं तारुण्ये एव संगृह्णीयात् । पारलौकिकसुखाय तु सर्वेणापि जन्मना सर्वात्मना सर्वदा यतेत' इति ।

ततश्चैवं श्लोकार्थं भावयतोऽस्य मनसि समुदभूच्चिन्ता, 'ऐहिकेषु पुरुषार्थेषु समस्तेषु जायासुतधनगृहपशुक्षेत्रमित्रभृत्याधिकारादिषु न किञ्चित् परिहीयते मम । परलोकसाधनं पुनरनेकैरनेकधा समुपपाद्यते नानाविधैश्शास्त्रैः चेतसस्संशयशतावहैः; तत्किं करणीयमिदानीम् ?' इति ।

अथ च कथञ्चित्समाहितमनाः प्रभात एव स्वपुरोहितं परमसात्त्विकं विदितसकलवेदितव्यं संपत्पूर्णनामानं (शेल्वनंबि) आनाय्य प्रपच्छ—'भगवन् ! तत्त्वहितपुरुषार्थानां निष्कृष्टं स्वरूपमवधार्य ततो यतेत श्रेयसे । तत्कथमवगच्छाम्येषां यथावस्थितं स्वरूपम्' इति ।

पुरोधास्त्वब्रवीत् — "भगवानापस्तम्बो ब्रवीति स्वधर्मसूत्राणामारंभे, धर्मज्ञसमयः प्रमाणं वेदाश्च' इति । अस्यायमर्थः । धर्मं जानन्तीति धर्मज्ञाः ।

धर्मश्चालौकिकश्रेयस्साधनम् । स च सिद्धधर्मभूतस्सिद्धोपायो नारायणः पुरुषोत्तमः । तस्य च सिद्धधर्मत्वं 'रामो विग्रहवान् धर्मः' 'कृष्णं धर्मं सनातनम्' इत्यादि प्रमाणसिद्धम् । तं जानन्तीति धर्मज्ञाः । तज्ज्ञानं च स्वयोगमहिमसाक्षात्कृतपरावरतत्त्वयाथात्म्येभ्यो ऋषिभ्योऽत्यन्तविलक्षणानां पराङ्कुशादीनां भगवन्निर्हेतुककटाक्षलब्धं लवशोऽपि सशयाज्ञानान्यथाज्ञान-विपरीतज्ञानाप्रामाण्यज्ञानानाम्कन्दितं तस्यैव भगवतो नारायणस्य समस्तहेय-रहितस्यासंख्येयकल्याणगुणगणजलधेरुभयविभूतिनायकस्य सर्वस्वतन्त्रस्य श्रियः पतेरपारकारुण्यवात्सल्यसौशील्यसौलभ्यादिकल्याणगुणाकरस्योपायत्वमुपेयत्वञ्चे-त्याकारकं तत्संश्लेषविश्लेषैकसुखदुःखकं परिहृततदितरधारकपोषकभोग्यजातं सततदनुभवैकरूपम् । तेषां धर्मज्ञानां यः समयः आचारः स एव मुख्यं प्रमाणम् । 'वेदाश्च'= तदाचारानुगुणा वेदाश्च प्रमाणम् । चकारोऽन्वाचये— यथा 'भिक्षामट, गाश्चानय' इति वाक्ये भिक्षाटनस्य प्राधान्यं, सति संभवे भिक्षाटनाविरोधेन गवानयनस्य विधानञ्चोच्यते; तथा पूर्वोक्तधर्मज्ञानामाचारः प्रधानं प्रमाणम् । तत्समानार्थकाः वेदाश्च प्रमाणमिति । तथा चोक्तं गीताचार्येण—

'यावानर्थ उदपाने सर्वतस्संप्लुतोदके ।
तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥' इति ।

'सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥' इति च ।

तस्मात् तादृशभगवत्कटाक्षलब्धज्ञानानामुपन्यासैः परावरपुरुषपुरुषार्थो-पायान् सम्यगवगम्य ततः श्रेयसे यतस्व । तदर्थं सकलक्षेत्रतीर्थवासिनो विदुषो वेदान्तवेदिनस्समाह्वापय" इति ।

राजाऽपि पुरोधोऽनुरोधेन सकलेभ्यो जनपदेभ्यस्समानाय्य विदुषस्सभां महतीं निरवर्तयत । तत्त्वहितपुरुषार्थनिश्चायकाय विदुषे समर्पणीयं बहुनिष्कभरितं विद्याशुल्कग्रन्थिं च समातोरणे बन्धयामास ।

एतावत्येव चानेहसि श्रीधन्विनूतनपुराधीशो वटदलशायी भगवान् श्रीविष्णुचित्तसूरिमुखेन सकलवेदान्तसारार्थान् प्रकटीचिकीर्षुः स्वप्नेऽस्य समागम्य एवमेनमाज्ञापयामास — ' भगवन् ! विष्णुचित्तसूरे ! प्रबुध्यस्व ! अद्यैव याहि पाण्ड्यराजधानीं मधुराम् । तत्र च विद्वद्गोष्ठ्यां श्रुतिस्मृतीतिहासपुराणवाक्यैः तत्त्वहितपुरुषार्थान्निर्धार्य जगदुज्जीवनाय ' इति ।

विष्णुचित्त ऊचे — ' भगवन् ! क्वाहमनाघ्रातशास्त्रगन्धो मन्दधीः ! क्व वा मीमांसाद्वयविचारणीयानि श्रुतिस्मृतीतिहासपुराणानि ? किं खनिलकुद्दालग्रहणजनितपाणितलकिणप्रदर्शनमात्राहरणीयं विद्याशुल्कम् ? ' इति ।

भगवानब्रवीत्— ' अहमादिर्हि देवानां महर्षीणां च सर्वशः । चतुर्मुखादिदेवानां व्यासादि महर्षीणाञ्च तत्तत्कर्मानुगुणं ज्ञानशक्त्यादीनां प्रदाता चाहमेव । एवं स्थिते मन्निर्हेतुककटाक्षलक्षितानां किमसाध्यम् ? किं तव भरस्तत्त्वनिर्णयः ? मदीयो हि स भरः ? तत्त्वरितं प्रयाहि पाण्ड्यपुरीम् ' इति ।

आगते च विष्णुचित्ते - तेजोविशेषानुमितभगवत्कटाक्षलब्धदिव्यज्ञाने सपुरोधसि नरपतौ प्रत्युद्गमनाभिवादनादिभिस्तं मानयति सति, तत्रत्येषु च सकलेषु पण्डितेषु ' नरपतिरयमविशेषज्ञः । यदस्मादृशेषु सत्स्वपि विद्वद्वरेषु येनायमनाघ्रातशास्त्रगन्धोऽपूज्यः पूज्यते ' इति विनिन्दत्सु, पुरोहितस्सप्रणाममेनं विष्णुचित्तमित्थमभ्यर्थयामास — ' भगवन् ! विष्णुचित्त ! समुदितायामस्यां पण्डितपरिषदि भवानेव श्रुतिनिकरशिरसि समधिगम्यं परं तत्त्वं निर्धारयतु' इति ।

ततश्च भगवान् विष्णुचित्तः वल्मीकजन्मा मुनिरिव विधातृवराद्रघुवरचरितं हसितभाषितगतिचेष्टितादिभिरनूनाधिकं, बाल इव चौत्तानपादिर्भगवतः

पाञ्चजन्यस्पर्शाद्वक्त्रे सकलवेदान्ततात्पर्यार्थगर्भं भगवतस्स्तुतिजालं, भगवत्-कटाक्षलब्धदिव्यज्ञानः साक्षात्कृत्य सकलं वेदान्तार्थजातमित्थमुपन्यास्थत् । तथा हि,—

" 'कारणं तु ध्येयः' इति श्रुतिः जगत्कारणभूतस्यैव वस्तुनो ध्यानविषयत्वं वक्ति । 'यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति' इति श्रुतिः ध्यानविषयस्यैवेहशरीरवियोगानन्तरं देशविशेषावच्छेदेन प्राप्यत्वं ब्रवीति । जगत्कारणं च ब्रह्मेत्यवगम्यते 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्म' इति तैत्तिरीयश्रुतेः । छान्दोग्ये 'सदेव सोम्येदमग्र आसीत्' इति सच्छब्द-वाच्यस्य, 'ब्रह्म वा इदमेक एवाग्र आसीत्' इति ब्रह्मणः, ऐतरेये 'आत्मा वा इदमेक एवाग्र आसीत्' इत्यात्मशब्दवाच्यस्य, अन्यत्र 'हिरण्यगर्भस्समवर्तताग्रे' इति हिरण्यगर्भस्य, अथर्वशिरसि 'शम्भुराकाशमध्ये ध्येयः' इति शम्भोः, कौषीतकया 'मामुपास्व' इत्यादिना इन्द्रस्य च जगत्कारणत्वमवगम्यते । तत्र सद्ब्रह्मात्मशब्दानां सामान्यवाचकत्वात् क्वचन विशेषे पर्यवसानं विना नार्थोऽव-गम्यते । यथा — 'पशुना यजेत' इति पशोः यागकरणत्वे श्रुते 'चतुष्पादः पशव' इति चतुष्पदा सर्वेषां यागकरणत्वे प्राप्ते 'छागो वा मन्त्रवर्णात्' इति छागात्मकपशुविशेषस्यैव यागकरणत्वं निर्णीयते । अनेनैव सामान्यविशेषन्यायेन सद्ब्रह्मात्मशब्दानां चिदचिदीश्वरत्रितयवाचिनां क्वचन विशेषे पर्यवसाने वाच्ये इन्द्रहिरण्यगर्भशिवशम्भ्वादिशब्दानां तत्तत्पुरुषविशेषवाचकत्वेऽपि, महोपनिषदि 'एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नेमे द्यावापृथिवी' इति नारायणाख्यदेवताविशेषनिर्धारणपुरस्सरं शाखान्तरोक्तहिरण्यगर्भशिवशम्भ्वक्षर-प्रभृतीनां कारणत्वनिषेधकण्ठोक्त्या च नारायणस्यैव जगत्कारणत्वं न ब्रह्म-रुद्रादीनामिति स्पष्टमेवोच्यते ।

यद्येवं ब्रह्मरुद्रादीनां कारणबोधकवाक्यानां का गतिः ? इति चेत् — सूत्रकारेणैव भगवता कृष्णद्वैपायनेन द्वेधा गतिर्दर्शिता — 'साक्षादप्यविरोधं जैमिनिः' 'अवस्थितेरिति काशकृत्स्नः' इति च सूत्रद्वयेन। अनयोरर्थस्तु जीवविशेषवाचिनामग्निवैश्वानरादिशब्दानाम् 'अग्रं नयतीत्यग्निः' 'विश्वेषां नराणां नेतृत्वाद्वैश्वानरः' इत्याद्यवयवव्युत्पत्त्या यथा भगवत्परत्वं तथा शिवशंभ्वादिशब्दानामपि मङ्गलकरत्वाच्छिवशब्दवाच्यत्वम्। 'शं-सुखं भावयतीति शंभुः' इति निरतिशयसुखजननात् शंभुशब्दवाच्यत्वम्। 'इदि परमैश्वर्ये' इति धातोः रप्रत्यये इन्द्रशब्दनिष्पत्त्या सर्वेश्वरत्वादिन्द्रशब्दवाच्यत्वं नारायणस्यैवेत्येका गतिः। 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद, यस्यात्मा शरीरम्' इत्याद्यन्तर्यामिब्राह्मणोक्तरीत्या जीवात्मनि परमात्मनोऽन्तर्यामितया अवस्थितेः अवस्थानात्, जीवात्मवाचिशब्दानां परमात्मनि पर्यवसानात् जीवात्मवाचिशब्दैः परमात्माभिधानम्। शरीरवाचिशब्दैः तदन्तरवस्थितस्य जीवात्मनो यथावाच्यत्वं, ब्राह्मणोऽहं, मनुष्योऽहं, देवदत्तोऽहमित्यादिषु दृष्टं, तथैव सर्वशरीरकस्य नारायणस्य स्वशरीरभूतशिवहिरण्यगर्भेन्द्रादिशब्दवाच्यत्वमिति अन्या गतिः इति।

नन्वेवं सति सूत्रद्वयोक्तन्यायेन नारायणशब्दस्यैव शिवादौ कुतो न पर्यवसानम् ? इति चेत् — विधिशिवेन्द्रादीनां सृज्यत्वकर्मवश्यत्वप्रतिपादकप्रमाणवचनशतैः जीवत्वसिद्ध्या तद्वाचिशब्दानामुक्तन्यायेन नारायणे पर्यवसानम्। *नारायणशब्दस्य तु 'नाराणामयनम्' 'नाराः अयनं यस्य' इति व्युत्पत्तिद्वयेन* सर्वाधारत्वसर्वप्राप्यत्वप्रापकत्वसर्वशरीरकत्वादि प्रतिपादनात् 'विष्णुर्नारायणः कृष्णः' इत्यादिकोशात् रूढिशक्त्या च शिवादीनां नारायणशब्दवाच्यत्वबाधात् शिवादौ न पर्यवसानावकाशः।

किं बहुना ! एतादृशानेकसंशयपरिहारायैव तत्तत्कारणवाक्येषु कारणत्वेनावगतान् परब्रह्म-परतत्त्व-परज्योतिः-परमात्म-ब्रह्मशिवेन्द्राक्षरादीननूद्य तेषां प्रत्येकं नारायणत्वं विधत्ते—'सहस्रशीर्षन्' इत्याद्यनुवाकः।

'नारायण परं ब्रह्म तत्त्वं नारायणः परः।
नारायण परो ज्योतिरात्मा नारायणः परः।
स ब्रह्मा स शिवस्सेन्द्रस्सोऽक्षरः परमःस्वराट्।' इत्यादिना।

तदेतत्सूत्रकारो ब्रूते—'लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि' इति।

किञ्च — एतादृशन्यायसञ्चारनिरपेक्षमेव श्रुतिः सुस्पष्टं ब्रवीति। 'तमीश्वराणां परमं महेश्वरम्' इत्यादौ महेश्वरशब्देन कः प्रोच्यत इति जिज्ञासायां, 'यद्वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः। तस्य प्रकृतिलीनस्य यः परस्स महेश्वरः' इति। अस्यार्थः — 'स्रवत्यनोङ्कृतं पूर्वं परस्ताच्च विशीर्यते' इति मनूक्तरीत्या वेदस्यादौ वेदस्यान्ते च प्रतिष्ठितो यत्स्वरः वेदाध्ययनारम्भे वेदाध्ययनान्ते च सर्वैः वैदिकैरुच्चार्यमाणः यः प्रणवः तस्य प्रकृतिरकारः, तस्मिन् लीनस्य = प्रणवमूलभूतस्य अकारस्य यः परः = यो वाच्यः, स एव महेश्वरः। तथा च — 'अकारो विष्णुवाचकः' 'अक्षराणामकारोऽस्मि' 'अ इति भगवतो नारायणस्य प्रथमाभिधानम्' इत्यादिना अकारवाच्यत्वं नारायणस्यैव। अकारवाच्यं नारायणमुद्दिश्य महेश्वरत्वं विधीयते इति।

इत्थञ्च — नारायणस्यैव कारणत्वोपास्यत्वप्राप्यत्वप्रापकत्वमोक्षप्रदत्व-नियन्त्रन्तररहितनियन्तृत्व-सर्वचेतनाचेतनान्तर्यामित्व-सर्वशरीरकत्व-श्रियः-पतित्वादिभिः प्रमाणान्तरागोचरैः श्रुत्येकसमधिगम्यैर्धर्मैः परत्वसिद्ध्या नारायणः एव परं तत्त्वम्। उपायत्वमुपेयत्वञ्च तस्यैवासाधारणो धर्मः। सिद्धोपायकृपि-फलभूता भक्तिः प्रपत्तिर्वा व्याजोपायः।

पुरुषार्थस्तु — हार्दानुगृहीतस्यास्य भक्तस्य प्रपन्नस्य वा मूर्धन्यनाडी-निष्क्रमण-अर्चिरादिसरणिगमन-अण्डाण्डावरणातिक्रमण-विरजानदीस्नान-सूक्ष्मशरीरविधूनन-दिव्यविग्रहपरिग्रह-सूरिजनप्रत्युद्गमन-दिव्याप्सरःक्रियमाणब्रह्मालङ्कारालङ्करण-दिव्यवैकुण्ठनगरगोपुरप्राकारमण्डपादिदर्शनप्रणामप्रदक्षिण-तत्रत्यसूरिजनप्रार्थनाङ्गीकृततत्तत्परिचरणभगवत्प्रासादांतरदिव्यास्थानमण्डपदर्शनप्रणाम-तत्प्रवेश तन्मध्यालङ्कारभूतसहस्रफणामणिमण्डितानन्तधर्मायासनविमलादिचामरग्राहिणीपरिमण्डिताष्टदलदिव्यसरोरुहतन्मध्यावस्थितपरिजनपरिच्छदभूषणायुध-दिव्यमहिषीशेषशेषाशनगरुडप्रमुखान्तरङ्गजनपरिवृतश्रीमन्नारायणदर्शनप्रणामाञ्जलिबन्ध-स्तम्भीभवनतन्मन्दस्मितपूर्वकावलोकनदानतदाह्वानपूर्वकतदालापामृतार्णन-तत्समीपगमन-तत्पर्यङ्कारोहण-तदालिङ्गन-तत्कृतम्वमूर्धावघ्राणन स्तुति-नमस्कृत्यादिरूप–भगवदनुभवजनितानवधिकातिशयप्रीतिकारिताशेषशेषवृत्तिरेवं ।
तदेतदखिलं कौषीतक्यादिसकलोपनिषत्प्रसिद्धम् । एतदेवार्थजातमखिलस्मृतीतिहासपुराणादिकमनुमोदते, सुस्पष्टं व्याख्याति बहुमुखश्चेति ।

पूर्णे तूपन्यासे तूर्णमेव निष्कपूर्णो विद्याशुल्कग्रन्थिस्तोरणावबद्धस्स्वयमेवास्य पुरस्तान्निपपात । श्रुत्वा चैनमुपन्यासं दृष्ट्वा च विद्याशुल्कनिपतनं विस्मयस्मेरमुखो राजा पुरोहितो राजविनिन्दका विद्वांसश्चाविशेषेण स्तब्धाः मुग्धाः भग्नाभिमानाः प्रणिपत्य विष्णुचित्तपदपङ्कजयोः तावताप्यपर्याप्तप्रीतयः तं नरपतेरौपवाह्ये मत्तमतङ्गजेऽवस्थाप्य सविद्याशुल्कं चतसृषु नगरराजरथ्यासु छत्रचामरादिपरिच्छदैः सकलवाद्यघोषैश्च पादचराः समानिन्यिरे । पाण्ड्यजनपदाधिपो वल्लभदेवस्तु विष्णुचित्तं तं तदा तादृशवेदान्तार्थोपन्यासात् भट्टानां = वेदवेदान्तार्थवेदिनां प्रवक्तृणाञ्च, नाथः=स्वामी, पूज्यः इति कृत्वा नाम्ना भट्टनाथं विदधे । ततः प्रभृति विष्णुचित्तो भट्टनाथः प्रथते ।

अस्मिन्नेव च समये अभिषेकमनोरथेन सुमन्त्रमुखादाहूतमायान्तं मुहुः पश्यन्नपि रामं यथा न ततर्प दशरथः तथा गजस्कन्धाधिरूढं महता वैभवेन राजरथ्यासु समायान्तं स्वभक्तजनाग्रेसरं भट्टनाथं द्रष्टुकामो भगवान् करधृत-सुदर्शनपाञ्चजन्यप्रभृतिप्रहरणगणः श्रिया सह पतगपतिमारूढः कनकगिरिशिखर-विहरदचिररुचिरचितरुचिरिवासितवारिधरः, स्वदर्शनकुतूहलानुधावद्विधिशिव-पुरन्दरपुरस्सरसुरनिकरस्तुतिरवनिरन्तरसुरवर्त्ममण्डलः त्वरयान्वसरत् ।—

अथ रथोपस्थोपविष्टो नर इव विश्वरूपदर्शनाय गजस्कन्धोपविष्टो भगवद्दर्शनाय तदनुगृहीतदिव्यचक्षुरैक्षत प्रत्यक्षमेव चक्षुरासेचनकं तादृक्ष-मधोक्षजम् । तत्क्षण एवायं स्वातिशयमिव पराघृष्यताप्रयोजक भगवतः परत्व-मपि विस्मृत्य हृदयकीलिततदीयसौन्दर्यसौकुमार्यलावण्ययौवनादि-दिव्यमङ्गल-विग्रहगुणगणः विषीदन्नतीव, अनाघ्रातप्राकृतगन्धगन्धैः प्रीतिमात्रयात्रैः शेष-शेषाशनादिभिरनवरतपरिचर्यमाणचरणनलिनस्य तमसः परस्तात् परमे पदे सूरिभिस्सदा सेव्ये स्थानेऽवस्थितस्य श्रीभूनीलादिभोग्यभूतस्य परमपुरुषस्य अस्मिन्नरकप्राये असुरराक्षसमनुजपिशाचादिभूयिष्ठे भूलोके सञ्जातं सान्निध्य-मवलोक्य को वानर्थस्समापतिष्यतीति व्याकुलन् गजपार्श्वद्वयलम्बिघण्टाद्वयं करद्वयेनादाय तालीकृत्य जगावेवं मङ्गलम् । —

'यावत्कालं जयतु भगवन् ! सुन्दरं दिव्यरूपं
मल्लध्वंसप्रबलदृढदोर्नीलरत्नाभगात्र !
विश्लेषेण क्षणमपि विनाहं त्वमप्यास्वहे त्व-
द्वक्षोलक्ष्मीः करयुगधृतौ चक्रशङ्खौ जयन्तु ॥'[1] इति ।

तावता पर्याप्तिमलभमानः स्वासन्नान् ऐश्वर्यकैवल्यभगवच्चरणार्थिनः त्रीनपि समाहूय तैस्सह च मङ्गलमाशासामास । तदा गजस्कन्धावस्थितेन

[1] पल्लाण्डु पल्लाण्डु इत्यादि-प्रथमपद्यस्यानुवादः ।

कृतमिदं मङ्गलाशासनमेव द्वादश- (१२) पद्यपरिमितः 'तिरुपल्लाण्डु' इति प्रसिद्धः संस्कृतवेदस्य प्रणव इव द्राविडवेदस्यादावनुसन्धेयः प्रबन्धोऽभूत् ।

ततो भट्टनाथो राजानं विशेषतोऽनुगृह्य तेन प्रस्थापितस्सह रक्षिवर्गेण विद्याशुल्केन श्रीधन्विनूतनपुरीमागत्य तस्यैव वटपत्रशायिनः पुरस्ताद्धनं निक्षिप्य प्रणम्य "भगवन् ! तत्र गन्तुं शास्त्रार्थानुपन्यसितुं विद्याशुल्कमाहर्तुं च भवत्प्रेरितेन मया दासदेशीयेन समाहृतं सकलमिदं धनं स्वामिनस्तवैव । स्मर्यते हि — 'यस्यैते तस्य तद्धनम् इति' इति विज्ञाप्य विनियुज्य च तत्कैङ्कर्ययैव यथापुरं पुष्पकैङ्कर्य एव निरतो बभूव ।

ततश्चैतादृशकैङ्कर्यप्रेरितारं श्रीमालाकारगृहगतं मालाश्च स्वयमेव याचमानं कालतः स्वस्य स्वल्पान्तरं श्रीकृष्णं भावयन् भावनानुगुणमेव दर्शितासु भगवता स्वावतारप्रभृतिस्वबाललीलासु सर्वासु निरवशेषं तान्तामनुभूय लीलां यशोदागोपगोपिकादितादात्म्यमापन्नः तत्तदुक्तिमिषेण स्वानुभवपरीवाहरूपं ( पेरियाळ्वार् तिरुमोळि, पद्यसङ्ख्या ४६१ ) 'भट्टनाथश्रीसूक्ति'-नामानं प्रबन्धमेकं दिव्यमुद्भाव्य लोकानुज्जीवयामास ।

तत्र च प्रबन्धे प्रथमतः प्रभृति प्रतिदशकं श्रीकृष्णजन्मोत्सवानुभवं शिशुदर्शनागताभ्यो गोपिकाभ्यः आपादचूडं कृष्णस्य प्रत्येकावयवप्रदर्शनं, डोलिकायां शाययित्वा कृष्णं गानपूर्वकमान्दोलनं, कृष्णकृतचन्द्राह्वानस्य यशोदानुवादं, शिशुनर्तनं, हस्ततालताडनं, रामकृष्णयोः पादसञ्चारारंभकालिकस्खलद्गमनं, पुरस्तादागत्यालिङ्गनं, तथा पश्चादज्ञातेनागत्यालिङ्गनं, यत्किञ्चित् पतलिपत्रादिकं प्रदर्श्य कीटादिदंशनमनूद्य कृष्णेन मातुर्भयजननं, स्तन्यपानाय यशोदया कृष्णाह्वानं, पनसफलादिप्रदानप्रलोभनेन कृष्णमाहूय तत्कर्णवेधनकर्णाभरणधारणादिकम्, अभ्यञ्जनस्नानायाह्वानं, दन्तकङ्कतिकया केशवकेशप्रसाधनं, तत्समये कृष्णस्य निश्चलतासम्पादनाय वत्सपालनदण्डमाहर्तुं काकस्य

आघ्रापनं, चम्पकमल्लिकापाटलीपुन्नागादिकुसुमैः शिरोलङ्करणं, सायं दीपारोपणसमये शिशुरक्षाकरणं, तदुद्भवनेभ्यः आगत्य कृष्णकृतानि पयोदधिनवनीतभक्ष्यभोज्यकन्याभरणाद्यपहरणरूपदुष्टचेष्टितानि तद्गोपिकानिवेदितान्याकर्ण्य खिन्नचित्तया यशोदया कृष्णाह्वानं, गोपकन्याविषये कृष्णकृतानां पङ्कप्रक्षेपवस्त्राभरणाद्यपहरणपूर्वकं द्रुतानुधावनादिरूपाणां दुष्टचेष्टितानां तामिर्यशोदायै निवेदनं, शैशव एव कृष्णकृतान्यतिमानुषाणि चरित्राणि स्मरन्त्या, यशोदया स्वाङ्कशयिताय कृष्णाय स्तन्यं दातुं स्वमहामीतिकथनं, वत्सपालनाय काननं प्रति कृष्णं प्रस्थाप्यानुपदमेव 'आहारच्छत्रोपानद्यादिकं कठिनहृदयया मया न दत्तम् । अत्रैव कृष्णस्य सुखलीला विघ्निताः । कानने केवलं बहवः क्लेशा अनुभूयन्ते । अत्र चाहमेव निदानमासम्' इति यशोदया स्वानुतापकथनं, ततस्सायं वत्सैः वत्सपालैश्च सहायान्तं वन्यकुसुमस्तवकगुञ्जामयूरपिञ्छादिभिः अलङ्कृतसर्वावयवं वत्सधूलिधूसरितकुन्तलपक्ष्ममालं दिव्यरूपं कृष्णमालोक्य परवशायाः चुम्बनालिङ्गनस्नानभोजनाद्यभ्यर्थनादिरूपं यशोदायाः कृष्णानुभवप्रकारं, चारयित्वा गाः काननान्निवृत्तं स्ववयस्यैर्गोपकुमारैस्सह तथा तथा तत्क्रीडन्तं वन्याभरणभूषितं वेणुगानेनैव रूपेण चेष्टया च नवनीतखण्डानीव गोपतरुणीचेतांस्यपहरन्तं दृष्ट्वा तासां कामपरतन्त्रतां, गोवर्धनोद्धरणचरितं, भगवतः कृष्णस्य वेणुगानसमये कृष्णगोगोपवन्यमृगगन्धर्वाप्सरोदेवादीनां या यास्समजायन्तावस्थाः तासां सर्वासामनुभवं, कृष्णमवलोक्य व्यामुग्धानां गोपमुग्धाङ्गनानां या यास्समजायन्तावस्थास्तासां तन्मातृभिः कथनं, एतादृशीनां स्वपुत्रिकाणां स्वगृहेऽनवलोकनात् कृष्णानुगमनं, कृष्णेन पुत्रिविरहदुस्सवस्थापनम्, अन्यत्रापनयनम्, इत्याद्याशङ्कमानानां तन्मातृणां 'कृष्णायैव पर्यान्वेनाम्मत्पुत्रिकाप्रदानं श्रेयः; नैनाहृतापवादश्रवणम्' इत्याद्यनुतापप्रकारं, कयोश्चित् गोपिकयोः कौसल्यायशोदानन्दनयोश्चरितगानपूर्वकं नर्तनविशेषम्, एतत्प्रमहात् दशवदनभवनाशोकवनिकावसितायै सीतादेव्यै रामदूतेनाञ्जनानन्दनेन विविध-

रामाभिज्ञानकथनपूर्वकं रामाङ्गुलीयकप्रदानं, तत्प्रसङ्गान्नृसिंहवराहरामकृष्णाद्यवताराननुभूय ततश्चार्चावतारप्रावण्येन वनगिरिनाथस्य सुन्दरबाहोरनुभवं दशकद्वयेन, ततो गोष्ठीपुराधीशगुणानुभवपुरस्सरं तद्भक्तदितरयोरुत्कर्षापकर्षौ प्रतिपाद्य, अथ चानृशंस्येन परोपदेशप्रवृत्त्या मरणसमयसभाव्यमानाः यावतीर्दुरवस्थाः बोधयित्वा तत्पूर्वमेव भजत भगवन्तं जनाः इत्युपदिश्य, अनन्तरमशनाच्छादनाशया यत्किञ्चिदपि दातुः मानुषमात्रस्य हेयतरस्य नाम्ना भवत्पुत्रान्मा संबोधयत; यस्य कुमारस्य नाम नारायण इति क्रियते तत्पित्रोर्नास्ति नरकसंभावनापीत्युपदिश्य, ततः 'कण्डङ्कडि' नगराधिपं प्रकीर्त्य, प्रसङ्गान्मधुरासालग्रामद्वारकायोध्याबदरिकाश्रमादीन् प्रशस्य, ततः श्रीरङ्गं प्रशस्य दशकद्वयेन, ततो 'मरणसमये यमभटकरिष्यमाणयातनाशतानुभवसमये भवतः स्मरणनामसङ्कीर्तनादीना नाल्पोऽप्यवकाशः, अत इदानीमेव यथाशक्तिस्मरणकीर्तनादिकं कृतं मया; अन्त्यकाले तु भवानेव मे रक्षको भूयात्' इति श्रीरङ्गनाथं शरणं प्रपद्य, ततः स्वनैच्याकिञ्चन्यानन्यगतित्वतदेकरक्ष्यत्वनैर्भयादि निवेद्य, अथ 'अस्मद् हृदये भगवदाक्रान्ते पूर्ववद्युष्माकमद्य नावकाशः। तदितोऽन्यतस्त्वरितमपयात।' इति स्वदुरितानि प्रतिबोध्य, पुनरपि वनगिरिनाथं प्रति स्वसांसारिकतापत्रयामिहतिनिवेदनपूर्वकं तदेकरक्षकत्वाध्यवसायं विज्ञाप्य, ततश्च श्रीवेङ्कटाचलाधीशितुः श्रीनिवासस्य स्वस्मिन् सान्निध्यविशेषाद् अपरिहार्यात् स्वकृतार्थताञ्च प्राचीकशत्।

इति श्रीविष्णुचित्तचरितम्

# श्रीगोदाचरितम्

देवस्य दिव्यमहिषीमादौ गोदामुपास्महे ।
यन्मौलिमालिकां प्रीत्या स्वीकरोति स्वयं प्रभुः ॥

अस्ति किल भरतखण्डस्यास्य अगस्त्यचरितायाः आशायाः उपान्ते पाण्ड्यो नाम जनपदः । तत्र च श्रीधन्विनूतनपुरी (श्रीविल्लिपुत्तूर्) इति काचन नगरी । तां चालंचकार भगवान् भट्टनाथापरनामा विष्णुचित्तसूरिः । यः किल तत्रत्यं वटपत्रशायिनं देवं प्रतिदिवसं स्वहस्तरचितपुष्पवाटिकाविवर्धितापचित-कुसुममालिकासमर्पणेन पर्यचरदिति तच्चरिते स्पष्टम् ।

स खलु भगवान् भट्टनाथः कदाचित्तुलसीवने खनन् खनित्रेण, कृषन्निव लाङ्गलेन यजनभूतलं जनको मैथिलः अलभत काञ्चन काञ्चनवर्णां वरवर्णिनीं क्षोणीकोणादुत्थितां सीतामिव पेटिकावस्थिताम् । स च दिवसोऽभवत् कलौ अतीतेषु सप्ताधिकनवतिसंख्याकेषु ( क्रिस्तपूर्वं २००५ ) हायनेषु नलवत्सर-कर्कटशुक्लचतुर्थीभौमवासरपूर्वफल्गुनीसङ्कलितः । तदुक्तं दिव्यसूरिचरिते, जयन्तीमालाया च—

'स विष्णुचित्तस्तुलसीवनावनिं खनित्रवक्त्रेण निखातयन् कलौ ।
शुभे मुहूर्ते शुचिमासि फल्गुनीभतीततारे तुलसीवनान्तरे ॥
सुवोऽभवत्काञ्चन बालकन्यकां भूम्यंशका वीक्ष्य विसिष्मिये मुदा ।' इति ।

'सिद्धानां शरदां कलावपगमे वर्षे नलाख्ये रवौ
याते कर्कटकं विधावुपचिते षष्ठेऽहनि श्रीमति ।
नक्षत्रेऽर्यमदैवते क्षितिसुवो वारे चतुर्थ्यां तिथौ
गोदा प्रादुरभूदचिन्त्यमहिमा श्रीविष्णुचित्तात्मजा ॥' इति च ।

तां चादायातीव विस्मितस्सः सीतामिव 'जनकः पुपोष प्रतिकलमति-प्रीत्यैवाशनादिसकलसामग्र्यापि। सा च भूदेव्यंशजा प्रतिदिवसमेधमाना क्रमेणावापालङ्कारप्रियं वयः। दिवसे च कस्मिंश्चित् सा भगवतो वटपत्रशायिनः अर्थे स्वपित्रावस्थापितां कुसुमपेटिकायां प्रसूनमालिकामादाय केशान् प्रसाध्य कङ्कतिकया तया चालंकृत्य कबरीं भूषयित्वात्मानं सर्वभूषाभिः आदर्शेऽवलोक्य 'किमहमनुरूपा भगवतः ? उत न ?' इति, पुनरवतार्य कबर्याः मालिकां यथापुरं कन्दुकीकृत्य कुसुमभाजनेऽवस्थापयामास। एवमेवानुदिवसं स्वपितुर-सन्निधाने कुर्वतीं तां कदाचिदतर्कितोपनतः पिता विलोक्यातिचुकोप तस्यै, 'किमेवं भगवदनन्यार्हां कुसुमस्रजमदूषयः कचसंसर्गेण ?' इति। नादाच्च मालिकां तां भगवते तस्मिन् दिवसे। व्यपीदत् केवलमतीताय एतादृश-वासरवाराय।

वटदलशायी तु भगवाननुदिनानुभूतगोदाकचपरिमलवासितमालिका-सौरभो भग्नाशो भूत्वा तस्यामेव निशायां स्वप्ने विष्णुचित्तमपृच्छन्निदानं मालिकाया अप्रदाने। भट्टनाथस्त्वकथयन्निदानं गोदाकेशपाशस्पर्शदूषणं मालायाः। भगवानुवाच भट्टनाथं 'हन्त! भग्नमनोरथः कृतोऽस्मि भवद्भिः। का वा माला सा या गोदाकेशपाशासंस्पृष्टा ? तस्याः को वा गन्धः ? का वा भोग्यता ? तस्मात्तामेव मे देहि' इति।

भट्टनाथस्तु पुनः पुनर्विचिन्त्य स्वाप्नं वृत्तान्तमवगम्य दुहितुर्भगवत्-परिग्रहातिशयं सरंश्चावतारक्रमं तस्याः निश्चिकाय तां श्रियं देवीं भुवं नीलां वा अवतीर्णां स्वगृहे। ततः प्रभृति तस्याः 'स्वनिर्माल्यदा देवी' इति (शूडिक्कोडुत्तनाच्चियार्) योगरूढं नामाभवत्।

अस्यास्तुलस्या इव सुगन्धः सहजः प्रादुरास परमभक्तिपरज्ञानपरम-भक्त्यादिः स्वरूपानुगुणः आत्मगुणगणः। ततश्च भगवत्संश्लेषविश्लेषैकसुख-

दुःखायास्तस्याः कामः 'पुंसां दृष्टिचित्तापहारिणं' 'पुंभावं मनसा ययुः' इत्यादिरीत्या रसाभासो न बभूव। अपितु रमणीयतमः। अत एव च सा सर्वान् सूरीनतिशेते स्म। तस्याः भगवद्विषयको मानसानुभवः बाह्यसंश्लेषापेक्षामुद्बोध्य तदलाभादुत्कण्ठां रणरणकं शरीरादिधारणासमर्थताञ्च क्रमेण जनयामास।

ततश्च साचिन्तयत् — 'केनोपायेनाहं ध्रियेय? अथवा, श्रूयते किल रासविलास–समयोन्मस्तकानन्द–विनश्यद्गुल्लवीजनपालनोपायाभिज्ञ–नन्दनन्दन–वञ्चिताः तद्विरहदवदहनदह्यमानाः गोपाङ्गनाः

'दुष्ट! कालीय! तिष्ठात्र कृष्णोऽहमिति चापरा।'

— श्रीविष्णुपुराणे ५–१३–२७

इत्यादिरीत्या तत्तदनुकारेण दध्रिरे इति। तन्ममापि तदनुकारादृते नान्यत् शरणम्" इति। चिन्तयानया सन्ततसन्तन्यमानया भ्रमरघुणनयादवाप सा गोपिकात्वम्। एवमनवरतभावनाबलात् अभवत्सा पुरी नन्दगोकुलम्। वटपत्रशायिनो मन्दिरं नन्दभवनम्। वटपत्रशायी तु नन्दनन्दनः कृष्णः। तत्रत्याः सवयसः कन्याः गोपकन्याः। तत्तद्भवनानि च गोपीभवनानि।

इत्थं च — तादात्म्यभावनायां विजृम्भमाणायां तस्याः तत्रत्याः गोपवृद्धास्सर्वे समेत्य गोपकन्यानां कृष्णे अत्यासक्तिं कृष्णस्य दुर्ललिततां धार्ष्ट्यञ्च विचिन्त्य यथेमाः गोपकन्यकाः कृष्णस्य दृष्टिपथे न पतेयुः, कृष्णोऽप्यासां यथा नयनगोचरो न भवेत्, तथैतास्सर्वाः भूग्यन्तर्गृहे स्थापयांबभूवुः। तत्रत्याश्च ताः कृष्णवदनकमलानवलोकनजनितरणरणकविदलितहृदयाः एवमाशासामासुः — 'अपि नामेदानीं दैवादवग्रह आपतेत्? क्षीणगोधनाः गोपजरन्तः मुवृष्टये नियमाचरणे अस्मान् अपि नियुञ्जीरन्? कृष्णोऽप्यस्मन्नियमाचरणसामग्रीसंपादनाय किं नियुज्येत? तद्व्याजेन कृष्णसंश्लेषमप्यपि नाम लभेमहि?' इति।

ततश्चासामनुकूलं दैवं तमेव मनोरथमभिपूरयदवग्रहमचिरेणैवाजनयत्। य एव गोपजरठाः निरबध्नंस्ताः भूमिगृहे, त एव तास्तस्मादाहूय वृष्टिसिद्ध्यर्थाय नियमाचरणाय न्ययूयुजन्। कृष्णं च तन्नियमोपकरणसज्जीकरणाय। ततश्च सर्वसमक्षमेव निश्शङ्कं सङ्घीभूताः गोपकन्यकाः कृष्णेनैवमभ्यधायिषत। " 'मासानां मार्गशीर्षोऽहं' इति रीत्या मम विभूतिभूतः मार्गशीर्षमासस्सौरः प्रादुर्भविष्यति श्वः। स च नियमाचरणोचितस्समय.। तद्बवतीषु या प्रथमं प्रबुध्यते सा सर्वा. बोधयतु। मिलिता मामागत्योद्बोधयन्तु भवत्यः। ततः अरुणोदय एव स्नात्वा यमुनाया मत्प्रणयसंपादितनियमोचितोपकरणाः साधयन्तु मासमेनं व्रतम्। भगवांस्तु पूरयिष्यति मनोरथमिव नः सर्वेषां भूतलं वृष्ट्या ।" इति।

एवं परस्परमाभाष्य गृहंगताः शयित्वा कथञ्चिद्रजन्यां सन्निहिते ब्राह्मे मुहूर्ते पूर्वप्रबुद्धैका गोपिकामन्या तेत्वन्या ताश्चान्याम् इति क्रमेण प्रबोध्य मिलितास्सर्वा. नन्दगोपभवनमवाप्य द्वारपालकं ततो नन्दगोपं यशोदा कृष्णं बलदेवं नीला च क्रमेण प्रबोध्य "भगवन्! इत एहि। देहि दर्शनम्। अलंकुरु सिंहासनमिदम्। निर्वर्तयास्मदागमनप्रयोजनम्। वितर चास्मभ्यं भवच्चरणसरसिजयुगलपरिचरणकल्याणम्। विजयस्व यावत्कालतस्त्वम्।" इत्यभ्यर्थ्य मङ्गलमाशास्य तेन च भक्तवत्सलेन तथैवानुमताः सविहितसर्वोपकरणाः स्नानाराधनादिकं साङ्गं व्रतं निरवर्तयन्त।

एवं रूपोऽस्या गोदायाः मानसानुभव एव पद्माकरः त्रिंशत्- (३०) पद्यपरिमितं (तिरुप्पावै) इति प्रबन्धमेव परीवाहं प्रावर्तयत। यः खलु प्रबन्धो नित्यं स्वानुसन्धानेन भगवन्तं रामानुजाचार्यं 'तिरुप्पावै जीयर्' इति स्वनाम्नैव निरूपणीयमकरोत्। अत एव चास्मदादीनामपि नित्यानुसन्धेयो भवति भविष्यति च।

अनेन च प्रबन्धेन परिनिष्पन्नोऽयमर्थः — 'भगवानेवानपायसिद्धः उपायः। स एवोपेयश्च। चेतनानामप्यचेतनवत्पारतन्त्र्यमेव स्वरूपम्। इच्छामात्रमेवाधिकारः।' इति।

इत्थमुपाये सिद्धेऽपि कृतेऽपि प्राप्यनिष्कर्षे इच्छायां चोत्कण्ठायां परिणतायामपि गोदादेवी 'अलब्धभगवत्संश्लेषा प्राप्यत्वरया कामिनीकामुकसंश्लेषजनकं मदनं राजसं देवतान्तरमपि संपूज्य प्रणम्य 'संश्लेषयाचाम्' इति प्रथमं प्रार्थयामास।

विदित्वा चैतदाश्रितवत्सलः कृष्णः सखीभिस्सह विविधोपकरणैः क्रीडन्तीमेनां निवारयन्तीमपि तदुपकरणव्याकुलीकरणव्याजेन बलादङ्गस्पर्शसुखजननेन विश्लेषान्तेन मोहयामास।

पुनरपि व्रतव्याजेन तापोपशान्त्यै यमुनामवगाहमानानामासां वासांस्यपहृत्य वृक्षमारुह्य बहुधा निर्भर्त्सितः अनुनीतः प्रार्थितश्च दयया दत्वा तद्वासांसि प्रधान्य द्विगुणीचकारास्या रणरणकम्।

तेन च रणरणकेन मम कृष्णसश्लेषो भविता न वेति विज्ञातुकामा शकुनशास्त्रक्रमेण भुवि मण्डलं विलिख्य तत्र काश्चन वराटिकाः अगणिताः निक्षिप्य तास्सपूज्य तच्छास्त्रक्रमेणैव 'योजयत मां कृष्णेन' इति प्रार्थयामास।

'अचेतनत्वात्ताभ्यः प्रत्युत्तरं न लब्धम्' इति मन्वाना 'चेतनत्वात् कोकिलोऽयं मत्कार्यं निर्वर्तयति' इति मत्वा 'मदीयां विश्लेषदशामशेषां विनिवेद्य केशवे तमानय मत्सकाशम्' इति कोकिलं दूतं प्रेषयामास कृष्णाय।

अथ कोकिलप्रेषणेऽप्यनागते कृष्णे,

'स्वप्ने वा यद्यहं कृष्णं पश्येयं सबलं तदा।
जीवेयं सोऽपि मां स्वप्नो मत्सरी नोपसर्पति॥'

---

[1] इतः आरभ्य तदुत्तरग्रन्थभूतस्य 'नाच्चियार् तिरुमोऴि' नामकस्य प्रबन्धस्य दशकार्थाः क्रमेण संगृहीताः।

इति स्वप्नदर्शनायापि वा स्पृहयन्त्यामस्यां 'य एषु सुप्तेषु जागर्ति कामंकामं पुरुषो निर्मिमाणः' इति श्रुत्युक्तविधया स्वाप्नपदार्थस्रष्टा दयालुर्भगवानस्याः स्वप्ने वितान-मुक्तागुच्छक-तोरण-मालिका-कदलीकाण्डक्रमुकस्तबकचन्दनवार्यभ्युक्षण-मङ्गलदीप-धूप-वाद्यघोषादिभिरलङ्कृतं विवाहमण्डपं, तत्र च विवाहोचितालङ्करणस्य स्वस्यागमनं, गोदायाश्च मन्त्रपूतकौशेयवस्त्रवरणमालिकाधारणपुण्यतीर्थोदकाभ्युक्षणप्रतिसरबन्धनपाणिग्रहणाग्निप्रदक्षिणाश्मारोपणसप्तपदीलाजहोमवधूवरगजयात्रादिकं सर्वं विवाहक्रममन्वभावयत्। गोदापि स्वानुभूतं स्वप्नवृत्तान्तमखिलं निवेदयामास सख्यै।

एवमनुभूतस्वाप्नसमागमा द्विगुणितविश्लेषव्यसना स्वानुभूतां तदधरामृतभोग्यतां भावयन्ती सततानुभूयमानतदधरपरिमलमाधुर्यं सततततत्पाणिशयं पाञ्चजन्यं सबहुमानं सासूयञ्च श्लाघयामास तत्सौभाग्यप्रदर्शनेन।

ततः श्रीशैलनाथाय श्रीनिवासाय सन्देशान् प्रेषयामास जलदैः। जलदास्तु नागच्छन्। किन्तु तत्रैव स्थित्वा ववर्षुः। तत्रत्यास्तरुगुल्माद्यास्तेन कुसुमिताः स्तबकिताश्च बभूवुः। चुकूजुः कोकिलाः। ननृतुर्मयूराः। मुमुदिरे चान्ये। तानि चोद्दीपनानि विलोक्य निर्विण्णैवं प्रार्थयत — 'मा बाधध्वं मां दयित इव यूयमपि। अपि तु तमानयत मत्सकाशम्। निवेदयत मद्वेदनाम्' इति।

कथञ्चिदाश्वस्ता कृष्णमभिसर्तुकामा विरहज्वरजीर्णा गन्तुमशक्ता स्वनिकटगताः गोपकन्यकाः प्रार्थयामासैवम् — 'नयत मां मधुरानगरं; नन्दगोपामीरं; नन्दभवनद्वारं; यमुनातीरं; कालीयह्रदावारं; ऋषिपत्न्यगारं; भाण्डीरवटतरुं, गोवर्धनगिरिं, द्वारकापुरं वा, यत्र सः दृश्येत नवनीतचोरो मच्चित्तचोरो वा' इति।

ततस्तावन्तं विलम्बमप्यसहमना ताः प्रोवाच — 'यद्यहं जीवेयं तदा नयन्ति भवत्यो मां मदुक्तानि स्थानानि। अतो मत्प्राणधारणोपाय एव भवतीनां प्रथममवश्यसंपादनीय आपतितः। तदेवं कुरुत सपदि। तस्य कामिनीजन-मनोवेदनानभिज्ञस्य परिधानं पीतं वसनमानीय वीजयत माम्। तदभिमततमां तेन धृतां नवतुलसीमानीय धारयत मदुत्तमाङ्गे। तदुरस्स्थलस्थितां यदि वनमालामानयन्ति भवत्यस्तर्हि कुचमण्डले मदीये विलोठयन्तु। गण्डूषजलं तदीयमानीयापनयत मदीयं तापं सेकेन। मुरलीविवरविनिस्सृतां तदीयां लालामानीय मार्जयत मम वदनं यथा भवति शीतलम्। तत्पदपङ्कजपरागैः आलिम्पत मदङ्गानि मत्प्राणसमीरणबहिरनपसरणाय। मत्कुचयुगलमिदं तद्बाहु-युगलेन सुसंश्लिष्टं सुदृढञ्च बध्नीत तद्वेदनापनोदनाय। यदि च तमहं पश्येयम् अफलाविमौ कुचौ समूलमुन्मूल्य तदुरसि प्रक्षिप्य निरवशेषमपनयेयं मदीयं सन्तापम्। स यदि तदीयेन विशालेनोरसा संयोजयेत् दुःखिताविमौ कुचौ तदा साधुकृतं भवेत्। यदि न तथा मन्यते तर्हि, मन्मुखमवलोकयन् 'अयि गोदे! किमनेन विषीदसि विफलेन मनोरथशतेन; गच्छ यथेच्छम्' इत्यपुन-राशमृतं ब्रूयात्, तत्तु सुतरां समीचीनम्' इति।

पुनरपि तद्दर्शनोत्कण्ठया सम्मुखागतास्सर्वाः अपृच्छत् — 'अपि नाम स दृष्टो युष्माभिर्मच्चित्तचोरो यत्र कुत्रापि?' इति। 'दृष्टोऽस्माभिर्बृन्दावने' इति मुहुर्मुहुस्ताभिरभिहिता दधार जीवितं यथाकथञ्चित्। एवंविधानुभवपरीवाह-रूपोऽपरः प्रबन्धोऽस्याः 'नाच्चियार् तिरुमोळि' इति प्रथितः, त्रिचत्वारिंश-दुत्तरशत-(१४३) पद्यपरिमितोऽद्याप्युज्जीवयति लोकान्।

इत्थं स्थिते

'पतिसंयोगसुलभं वयो दृष्ट्वा च मे पिता।
चिन्तार्णवगतः पारं नाससादाप्लवो यथा॥'

इति सीताविवाहयोग्यवयोदर्शनविह्वलो जनक इव भट्टनाथोऽपि स्वदुहितुर्विवाहयोग्यं वयो दृष्ट्वा चिन्तामपरिमेयामाविवेशानुगुणवरान्वेषणे। ततश्चापृच्छत्तामेव 'कं वा वृणीषे वरम्' इति। सैवं प्रत्युवाच—"'गोदा मनुजपरिणेया' इति वचो यावन्न निपतति मदीये श्रवसि तावदेव मे जीवितम्" इति। किञ्च—"कुचाविमौ 'भगवन्तमन्तरा नान्यं मनुजपशुं पश्येव' इति कञ्चुकच्छद्मना स्वमुखे आच्छाद्य लज्जेते" इति।

'तर्हि कथं कुर्मः' इति पृष्टा पित्रा गोदा श्रीरङ्गाद्यष्टोत्तरशतदिव्यक्षेत्रवासिनां भगवतां सौन्दर्यसौकुमार्यलावण्यादीन् कल्याणगुणगणान् पृष्ट्वा तेन च वर्ण्यमानानाकर्ण्यातीव बद्धभावा श्रीरङ्गराजे सर्वातिशायिसौन्दर्ये तमेव वरयामास।

ततश्च 'अर्चारूपिणा भगवतास्याः पाणिग्रहणं कथं सङ्गंस्यते' इति चिन्ताकुले विष्णुचित्ते श्रीरङ्गनाथस्तस्यामेव निशायामस्य स्वप्ने 'भवद्दुहितरमरमानयत श्रीरङ्गम्। यथाहमस्याः पाणिं गृह्णीम वयम्। अलमनया चिन्तया' इत्यादिदेश। स्वपरिजनञ्च सर्वमाज्ञापयामासैवम्—'छत्रचामरतालवृन्तादिसकलपरिच्छदैः श्रीधन्विनूतनपुरीमद्यैवासाद्य निखिलभूषणभूषिताङ्गीं गोदा देवीं मणिमयान्दोलिकायामुपवेश्य समस्तवाद्यघोषैरानयत मत्सकाशम्' इति।

श्रीरङ्गराजपरिजनस्तु यथानिदेशमासाद्य श्रीधन्विनूतनपुरीं, प्रणम्य विष्णुचित्तं, विज्ञाप्य रङ्गराजाज्ञां यथावृत्तं विज्ञापितेन वटपत्रशायिनानुमतेन विष्णुचित्तेन सहानतिक्रान्तराजमहिषीमर्यादा गोदामादाय श्रीरङ्गराजसकाशम् आजगाम।

गोदादेवी तु सकलपरिजनपरिच्छदैस्साकमासाद्य रङ्गराजपुरोङ्गणभुवम् अपास्य मणिमयान्दोलिकायाः यवनिकाम् अवतीर्य सर्वसमक्षं सर्वाङ्गसुन्दरी

# ŚRÌ ĀNDĀL



श्रीगोदादेवी

कर्कटे पूर्वफल्गुन्यां तुलसीकाननोद्भवाम् ।
पाण्ड्ये विश्वम्भरां गोदां वन्दे श्रीरङ्गवल्लभाम् ॥

# SRĪ BHAKTĀṄGHRIREṆU SŪRI



श्रीभक्तांघ्रिरेणुसूरिः — तोण्डरढिप्पोडि आळ्वार्

धनुषि ज्येष्ठनक्षत्रे मण्डङ्कुडिपुरोद्भवम् ।
चोळोर्व्यां वनमालांशं भक्तपद्रेणुमाश्रये ॥

सर्वभूषणभूषिता सविलासमन्दगमना अवगाह्य श्रीरङ्गान्तर्मन्दिरं शनैरारुह्य शेषशयनं भगवच्चरणसरसिजपरिचरणपरायणा परिपूर्णमनोरथा तत्रैवान्तरधत्त।

अवलोक्य चैतदतिविस्मयनीयं वृत्तं विष्णुचित्तान्तरङ्गान्तेवासिवल्लभदेव-प्रभृतिषु सर्वेषु चित्रीयमाणचित्तेषु श्रीरङ्गनाथः प्रोवाच विष्णुचित्तं — 'भो! भो! भट्टनाथाः! भवन्तो ममेतः परं श्वशुरास्संवृत्ताः पयःपयोधिराज इव। गृहीतेमां मदीयां संभावनाम्। यात यथापूर्वं वटपत्रशायिनो नित्यकिङ्करत्वाय' इति। विष्णुचित्तोऽपि समवाप्य तीर्थमाल्यशेषवस्त्रश्रीपादुकोत्तमाङ्गालङ्करण-पूर्विकां संभावनां हर्षविषादव्यतिकरितहृदयो यथानिदेशमासाद्य श्रीधन्विनूतन-पुरीं यथापुरमवातिष्ठत वटपत्रशायिनो नित्यसेवानिरतः।

अत्रेयमाशङ्का जायेतापि श्रोतॄणां 'कथमर्चारूपस्य भगवतस्सायुज्यं विभवावतारायाः गोदायाः?' इति। नेयं प्रमाणैकशरणानां प्रमाणानुगुण-ज्ञानानुष्ठानानां तादृशानुभवैकभोगानाञ्चोदेतुमलम्। एवं हि भगवतः शौनकस्य वचनम्।

'सुरूपां प्रतिमां विष्णोः प्रसन्नवदनेक्षणाम्
कृत्वात्मनः प्रीतिकरीं सुवर्णरजतादिभिः।
तामर्चयेत्तां प्रणमेत्तां भजेत्तां विचिन्तयेत्
विशत्यपास्तदोषस्तु तामेव ब्रह्मरूपिणीम्॥'                इति।

श्रूयते च श्रीपाणसूरिर्नाम वीणापाणिर्गायकोत्तंसः श्रीरङ्गनाथसायुज्यमेवमेव अवापेति। स्फुटमिदं तच्चरिते।

किञ्च—कलिजित्सूरिरपि श्रीरङ्गप्राकारं निर्माप्य वित्ताभावाद्दत्तभृतीन् कर्मकारान् सह्यजास्रोतसि निपात्य निहत्य तद्बन्धुजनाकृष्टः तान्नीत्वा श्रीरङ्ग-नाथमन्दिरं तद्गर्भभवनस्थितैः स्वमारितैर्वाचयामासैवं तान्। 'भो! भोः! अस्मद्बान्धवाः! मा हिंसतेमाम्परमोपकारिणोऽस्माकम्। निहीनतरजन्मानोऽपि

अकिञ्चना अपि महापातकिनोऽपि अपुनर्भवाः ब्रह्मानुभवेन परमानन्दमनुभवामो यत्प्रसादेन वयम्' इति । इदं च तच्चरिते स्पष्टम् ।

किं बहुना ! 'राजवोडेयर्' इति प्रसिद्धः कश्चन महीशूरजनपदाधिपतिः परमवैष्णवः एकादशीव्रतपरायणः श्रीयदुधरणीधरनाथस्य नारायणस्य चरण-युगलमवाप सर्वसमक्षमेवैकादश्यां रात्रौ । प्रातश्च द्वादश्यां राजधानीतो राज्ञो लोकान्तरगमनवृत्तान्तः प्रासरदिति श्रूयते चरित्रम् । यत्साक्षितयाद्याप्यलङ्करोति अर्चारूपेण स राजा तन्नियतस्तम्भमूलं भगवतो नारायणस्य मन्दिरे ।

इति श्रीगोदाचरितम्

# श्रीभक्ताङ्घ्रिरेणुचरितम्

चोलक्षितौ धनुषि मासि महेन्द्रतारे
य: प्रादुरास मुरजिद्वनमालिकांशः ।
रङ्गेशकेलिसखमूर्ध्वशिखं द्विजेन्द्रं
भक्ताङ्घ्रिरेणुमनघात्मगुणं प्रपद्ये ।

अथ भगवान् भक्तांघ्रिरेणुसूरिः चोळमण्डले तिरुमण्डङ्कुडिनामके ग्रामे अष्टाशीत्युत्तरपञ्चशतसङ्ख्याकेषु (५८८) कलावतीतेषु (क्रि. पू. २५१४) वत्सरेषु प्रभवनाम्न्यब्दे मासि च धनुषि तारकायाञ्च ज्येष्ठाभिधायां अङ्गारकवासरकृष्णचतुर्दशीसमलंकृतायां भगवतो वैजयन्त्याः अंशभूतः अवततार विप्रनारायणनाम्ना द्विजोत्तमकुले । तदुक्तं दिव्यसूरिचरिते, जयन्तीमालायाञ्च

'तत्रोदभूद्भागवतात् द्विजेन्द्रात्
माहेन्द्रभे मासि च मार्गशीर्षे ।
श्रीविप्रनारायणनामधेयो
मुरारिवक्षोवनमालिकांशः ॥ इति ।

देहश्रीशरदुत्तरे प्रभवनाम्न्यब्दे कलौ भास्करे
चापग्राहिणि भूमिसूनुदिवसे ज्येष्ठाभिधे श्रीमति ।
ऋक्षे कृष्णचतुर्दशीतिथियुते भक्तांघ्रिरेणुस्सुधीः
रङ्गेशाङ्घ्रिसरोरुहैकहृदयः प्रापावतारं भुवि ॥' इति च ।

तस्य चेत्थमाख्यानमाख्यास्यते तद्विद्भिः । 'जायमानम्' इत्यादिरीत्या जन्मसमय एव भगवतो नारायणस्य कटाक्षवीक्षणेन समेधमानज्ञानभक्तिवैराग्यः स तु भगवान् विप्रनारायणाख्यया स्वपित्रा संस्कृतो यथाविधि यथाकालं

चौलोपनयनाभ्यां च संस्कृतोऽधीतसाङ्गसशिरस्कस्वाध्यायो विदितनिखिलशास्त्रतत्त्वः परवैराग्यादकृतोद्वाहः कदाचित्—

'मरुद्वृधाया मध्यस्थं चन्द्रपुष्करिणीतटे ।
श्रीरङ्गमतुलं क्षेत्रं श्रिया जुष्टं शुभास्पदम् ॥'

इति जगत्प्रसिद्धं 'श्रीरङ्गं' नाम क्षेत्रोत्तमं समधिगम्य, तत्र च

'विमानमभ्येत्य चतुःप्रदक्षिणं
चतुर्दिशं तस्य कृतप्रणामः ।
तदन्तराविश्य विधिर्ददर्श
तमिन्द्रनीलाचलसन्निकाशम् ॥

प्रसन्नवक्त्रं नलिनायतेक्षणं
कृपामयं कान्तिनिकेतरूपम् ॥'

इत्यादिरीत्या श्रीरङ्गविमानमध्यस्थं भगवन्तं शेषशायिनं श्रियःपतिं श्रुतीनां योगिनां च वाङ्मनसागोचरमपि मांसमयेनैव चक्षुषा साक्षात्कृत्य 'तस्यैष आत्मा विवृणुते तनूं स्वाम्' इति तेनैव दर्शिते पुंसां दृष्टिचित्तापहारिणि पुष्पहासमुकुमारे निजदिव्यमङ्गलविग्रहे तद्गुणगौरवाक्रान्तः तत्रैव निमग्नचित्तवृत्तिः अभूत् ।

ततस्तदनुभवजनितप्रीतिकारितकैङ्कर्यैकमनोरथश्च तदत्यन्ताभिमतं कैङ्कर्यं किमिति विचिन्त्य 'भगवता कृष्णेन कंसध्वंसाय नन्दगोकुलान्मधुरां व्रजता स्वयमेव मालाकारभवनमेत्य मालैव याचिता । तेन च मालाकारेण 'धन्योऽहमर्चयिष्यामीत्याह माल्योपजीवनः' इति रीत्या समर्पितासु सुपरिमलकुसुममालासु, ताभिरलंकृत्य स्वात्मानमतीव मुदितम् । तस्माच्च पुष्पमालार्पणकैङ्कर्यादृते नान्यत्तदत्यन्ताभिमतम्' इति निश्चित्य तदर्थमुद्यानकरणप्रवृत्तो

महतीं पुष्पवाटिकां निर्माय तत्र तुलसीमल्लिकामाधवीजातीकुन्दवकुलचम्पकादि परिपोषणनिरतो विविधगन्धवर्णकुसुमरचितमनोहरमालिकाभिर्भगवन्तं प्रत्यहं पर्यचारीत् ।

एवं स्थिते कदाचित् तिरुक्करम्बनूरिति पुरे अप्सरोंशसंभवा लोकोत्तर-सौन्दर्यलावण्यविभ्रमविभवा 'देवदेवी' इति नाम्ना प्रसिद्धा काचिद्वाराङ्गना निचुलापुराधीशं चोलावनीपतिमुपनृत्य स्वानुरूपाभिस्सखीभिरभिवृता प्रतिनिवर्त-माना मार्गवशादागत्य श्रीविप्रनारायणविरचितोद्यानतरुतले प्रच्छायशीतले विश्रम्य कञ्चित्कालं क्रमेण च दृष्टोद्यानशोभा तत्रत्यैर्जननयनसमाकर्षकैः कुसुमितैः पनसाम्रपाटलनारिकेलनारङ्गजम्बीरलिकुचकदलीकुरवकवकुलाशोक-पुन्नागपूगीप्रभृतिनानानोकहनिवहैः तच्छिटपारूढशुकपिकशारिकामयूरप्रमुख-विविधशकुनिकुलविरुतैः श्रुतिसुखैः बहुविधकुसुमपरिमलैश्च घ्राणतर्पणैः मधुकर-कुलपरिपीतशिष्टमधुरमनिष्यन्दवाहिभिश्च मन्दगन्धवहैः शरीरसुखकरैः परवश-सर्वेन्द्रिया स्वाग्रजामवलोक्य जगाद— "अयि ! विलासिनि ! अस्मन्मार्गा-यासमोपणेन इदमुद्यानमुपहसति नन्दनवनमपि महेन्द्रस्य, चैत्ररथमपि धनदस्य कुसुमहासैरिति । सा त्वेनामब्रवीत् । भगवतः श्रियःपतेः शेषशायिनः उत्तमाङ्गमपि स्वप्रसूनमकुटैरलङ्कुर्वाणस्य भगवतो मृगयायासविश्रान्तिसुखदस्य अस्योद्यानस्यास्मत्सन्तापहरणे का कथा" इत्यादि ।

तदा तु भगवान् विप्रनारायणः प्रवृद्धकेशश्मश्रुः प्ररूढरोमनखरप्रक-राञ्चिताङ्गो धवलदन्तवस्त्रोर्ध्वपुण्ड्रो विधृततुलसीनलिनाक्षमालो दिव्योद्यानस्थिताना तरुगुल्मलतादीनामालवालतदासेचनादिकमाचरंस्तदेकाग्रचित्तवृत्तिरभूत् । इतस्ततः सञ्चरन्तीषु तासु वारनारीषु पश्यन्तीष्वपि सविलासमालपन्तीष्वपि सवक्रोक्ति, निर्विकारे स्वकार्यप्रवणे च विप्रनारायणे देवदेविकाब्रवीत् स्वसारं— "अयि ! विलासिनि ! भगिनि ! किमयमुन्मत्तः ? किं वा पण्डः ? यदस्मानपाङ्गेनापि

नावेक्षते पुरःस्थिताः । जरठाः स्त्रियोऽपि नो विलोक्य पुंभावं वाञ्छन्ति आत्मनाम् " इति ॥

सा त्ववदत्—"नायं क्लीबो नवोन्मत्तः किन्तु परवैराग्यवान्, रङ्गेश-कैङ्कर्यैकनिरतः त्वद्रूपसंपदं तृणायापि न मन्यते । रूपलावण्यगर्विता यद्येनं विभ्रमविलासहासेक्षणकिलकिञ्चितादिभिः स्ववशं नेष्यसि, तदाहं तव दासी भविष्यामि षण्मासान् । भवती च भविष्यति वारमुख्या " इति ।

तदेतत् श्रुत्वा देवदेवी च प्रतिजज्ञे —' यद्येनमहं न स्वाधीनं करिष्यामि तवैवाहं दासी भविष्यामि षण्मासान् ' इति । सपदि जहौ स्वानि सर्वाणि भूषणानि पत्रोर्णानि च । ददौ च स्वाग्रजाहस्ते । प्राहिणोच्च तास्सर्वाः स्वनगरीम् । अधृत कबरीम् ; दधारोर्ध्वपुण्ड्रम् ; दध्रे च ग्रीवायां नलिनाक्ष-मालिकाम् । पर्यधत्त शुक्ले वाससी । जगृहे च पाणिभ्यां शिरसा च विप्रनारायणचरणौ । नामूमुचच्च सुचिरं, पर्यषिञ्चत्केवलमश्रुधारया ।

विप्रनारायणस्तु द्रवीबभूव दयया । सान्त्ववचनैश्चोत्थाप्य तां पर्यपृच्छत् —' भद्रे ! किमिदम् ? ' इति ।

सा तु व्यजिज्ञपत्—

' भगवन् ! दासजनोऽयं लेभे वाराङ्गनाकुले जन्म ।
माता मे निर्बन्धात्यर्थकृते सर्वभोग्यां माम् ॥
प्राग्जन्मसञ्चितैरिह कलुषशतैर्भुज्यते दुःखम् ।
अत्रापि जन्मनि पुनस्तदेव चिन्वीय किं कलुषम् ॥
भगवदधीनं देहं नेहे हेयाय मनुजाय ।
विक्रेतुं तद्भगवन् ! सेवायै ते नियुङ्क्ष्वाशु ॥
भवदागमनं यावत् सान्निध्याद्गन्तुरथवा ते ।
भैक्षाहरणं तावद्रक्षेयं पुष्पवाटिकामेनाम् ॥
गत्यन्तरपरिमुक्तामकिञ्चनां रक्ष मां दयया ।' इति ।

स तु विप्रनारायणो विचिन्त्यार्ति तस्याः, भवतु को दोषः । 'नाहं पुरुषकारेण' इति हि भगवतो वाक्यम्। अहो! भगवतो महिमा! कास्याः निहीनतरं जन्म, क्वेदमसादृशामपि सुदुर्लभं ज्ञानं वैराग्यञ्च ! क कदा कं कथं वा अङ्गीकरोति भगवानिति तु न जानीमो वयम् । तिष्ठत्वियं भगवतः आरामरक्षणायालवालकरणाय तदासेचनाय कुसुमापचायाय मालाग्रथनाय कुटीवाटीशोधनाय वा इति मत्वा ता तत्र न्ययूयुजत् । प्रत्यहं भैक्षाहृतेनान्नेन स्वाराध्यं भगवन्तमाराध्य स्वयञ्च कृत्वा शरीरयात्रां मुक्तशिष्टेन तामप्यन्वग्रहीत् । अहो सर्वतो विरक्तस्यापि परिग्रहाशा स्वरूपानुगुणे विषये । को वा जानाति चिन्तितं विपरीतं भविष्यतीति ।

एवं यथाक्रमं सेवानिरतयोस्तयोरतीतेषु षट्सु मासेषु कदाचिद्वर्षासु महद्वर्षं वर्षति वासवे, कुटीं प्रविष्टे विप्रनारायणे, सा तु देवदेवी वर्षधारामिर्दण्डप्रमाणाभिराषादचूडमभिहन्यमाना कम्पमानपुलकिततनुकुमारतनुयष्टि कृतकरभुजस्वस्तिकबन्धा शीतबाधया दन्तवीणा वादयन्त्यपि बहिरेव स्थाणुरिव अवतस्थे ।

तादृशीं तस्या दुरवस्था पश्यत कस्य वा निर्घृणस्यापि न दयार्द्रं भवति चेतः । यदेना दयाविलीनहृदयस्स विप्रनारायणोऽन्तराजुहाव कुट्या. । सा तु भयभक्तिभरसुग्राही कुट्यन्तश्चरणौ न्यधत्तानिच्छन्तीव ।

विप्रनारायणस्तु तस्यास्तादृशीं दुरवस्थामालोक्य दयमानमानसः स्वोत्तरीय धारणाय तस्यै ददौ । सा तु लब्ध्वा उत्तरीयमवकाशं च चिराभिलषितं आसीना च शनैश्शनैस्परस्थे तं प्रार्थयत पादसंवाहनाय प्रसादम् । कथमप्यनुमेने च विप्रनारायणः । सा च पादानुपर्युपरि संवाहयन्ती हसन्ती मन्दं वीक्षमाणा चापाङ्गेन, भगवन्! दासीजन किमपि रहस्युपदिदृक्षामिनि

ययाचे दीनया वाचा । निचकार मनस्तत्क्षण विप्रनारायणस्य । जगृहे चास्या कर करेण । सा तु कृतकृत्यासीत्युक्त्वा सपरिषस्वजे दृढम् । निपेते विप्रनारायणेन वेश्यावागुराया मृगीसुतेनेवर्श्यश्रृङ्गेण ।

स्थाने चैतत् । उच्यते हि—

'अङ्गारसदृशी नारी घृतकुम्भमय पुमान् ।
तस्मात् घृतञ्च वह्निञ्च नैकत्र विनिवेशयेत् ॥'　इति ।

मनुश्चाह—'मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत्' इति ।

अन्येद्युस्स्वाभरणानि सर्वाण्यप्यानाय्य स्वात्मानमलंचकारापादचूडम् । पर्यधत्त च प्रतिक्षण नव नवं वसनम् । तेन नितरामप्रीयत विप्रनारायण । क्रमेण च भगवतो रङ्गनेतुरेकापि कुसुममाला दुर्लभैवाभूत् । उद्यानन्तु तदनयोर्विहारोद्यानमासीत् । कुन्दमालतीवासन्तीमल्लीनिकुञ्जा विहारलतागृहता प्रपेदिरे । अनुरागस्त्वनुकल ववृधे । न सेहे निमेपार्धमपि विश्लेषम् । न सस्मार सकृदपि रङ्गभर्तारम् । नीवारमुष्टिपरिपुष्ट आश्रमहरिणपोत इव तामेव अन्वधावत तत्र तत्र । एवं देवदेव्या छायाभूते विप्रनारायणे, स्थितिमेनामवलोक्य तस्या स्वसा स्वस्या दास्य देवदेविकाया जितकाशित्व च मुक्तकण्ठमचकथत् । सख्यस्त्वस्या शश्लाघिरे । देवदेवी तु स्वगृहमेव जगाम सपरिवारा कृतकृत्या ।

विप्रनारायणस्तु परित्यक्तस्ववर्णाश्रमानुगुणाचारवेपभाप, परिगृहीतकामुकवेपाचारसहवास स्वल्पेनैव कालेन विपरिणतो देवदेवीदासतामुपाययौ । बभूव तद्भवनमेव स्वभवनम् । कुलक्रमागत सर्वस्वमपि तस्या एवासीत् । निस्स्वीभूते च तस्मिन्निरकासयच्च स्वभवनात्सा । जातिधर्मो हि स वेश्याया । स तु प्रवेशमन्तरलभमान त्यक्तुमपि तामशक्नुवस्तद्भवनवहिर्वितर्दिकामतिदीन अधिशिश्ये ।

अथ निशीथे श्रीरङ्गराजः श्रिया सह विलासयात्राव्याजेन पर्यटन् तामेव रथ्यामाजगाम । तदैनं विप्रनारायणं दृष्ट्वा स्मित्वा च मन्दं, पुरुषकारभूता कमला पप्रच्छ स्वभर्तारं — 'कोऽयं वारवनिताभवनद्वारि शेते' इति । रङ्गराज उवाच — 'यः प्रत्यहं मकरन्दस्यन्दि-नानाविधवर्णपरिमल-कुसुममालासमर्पणेन नौ पर्यचरत्सोऽयं विप्रनारायणो देवदेविकापहृतसर्वस्वो निष्कासितश्च तया द्वारि दीनश्शेते' इति ।

लोकजननी तु भगवन्तमाह — 'नायमर्हति भवन्मायापाशं सर्वसाधारणम् । अन्तरङ्गो ह्ययमस्माकम् । विषयान्तराभ्यासङ्गहेतुभूतमस्य दुरितं निवर्तय निश्शेषम् । अवलोकनदानेन पालयैनम् । यथायमैकान्तिकात्यन्तिकत्वद्दास्यैकरतिः स्यात्' इति । तत् श्रुत्वा भगवान् तथेत्युक्त्वा स्वमन्दिरमागत्य गर्भगृहान्तः स्वाराधनपात्रेषु पञ्चस्वेकं सौवर्णं शुद्धोदकपात्रमानीय वेश्यागृहद्वारि स्थित्वा 'देवदेवि ! कवाटमुद्घाटय' इत्युच्चैराजुहाव । सा तु अन्तरेव स्थित्वा 'कोऽसि' इति प्रपच्छ । अयं तु 'रम्यजामातृनामाहं विप्रनारायणस्य दूतः । प्रेषितस्तेनाहमागमम्' इत्यब्रवीत् ।

सा तु धनाशया कवाटमुद्घाट्य किञ्चित् किमिति पर्यपृच्छत् । 'विप्रनारायणस्तुभ्यमिदं हेमपात्रं प्रायच्छत् । गृहाणैतत् ।' इत्युक्त्वा भगवता हेमपात्रे दत्ते सातिप्रहृष्टा गृहीत्वा तत्पात्रं 'विप्रनारायणमन्तराह्वय' इत्युवाच । पुनर्भगवान् बहिरागत्य वितर्दिकाशयं विप्रनारायणं देवदेविकाह्वयतीत्युक्त्वा अन्तः प्रापय्य श्रिया सह स्वमन्दिरमागत्य शेषशयने सुखं सुष्वाप ।

विप्रनारायणोऽपि विस्मृतस्वबहिष्कारदुःखः तया सह तांस्तान्कामाननुभवन् सुसुखमतिवाहयामास तां निशाम् । प्रातश्च देवालये कवाटमुद्घाट्य अन्तर्दृष्टे तपनीयशुद्धोदकपात्रमपश्यन्तः सर्वेऽर्चकपरिचारकादयः कैङ्कर्यपराः राजदण्डाद्बिभ्यतो राज्ञे व्यजिज्ञपन् । राजा तु निचुलापुरीन्द्रः अदण्डयत्

तत्सम्बन्धिनः पुरुषान् । एवं दण्ड्यमानेषु तेषु जलाहरणाय कावेरीमागता काचन देवदेविकागृहघटीचेटी स्वजारं तत्र दण्ड्यमानं दृष्ट्वा किमेतदिति तान् पृष्ट्वा तैरुक्तं वृत्तान्तं श्रुत्वा रात्रिवृत्तं देवदेविकागृहवृत्तान्तं तपनीयशुद्धोदकपात्रस्य तद्भवने स्थितिञ्चोक्त्वा राजकिङ्करानानन्दयत् ।

राजकिङ्करास्तु कर्णरसायनमेतदुपश्रुत्य झडित्यागत्य वेश्याभवनं विशोध्य स्तेयं स्वर्णपात्रं देवदेवीं विप्रनारायणं च राजनिकटं निन्युः । राजा तु पर्यपृच्छत्ताम्—'किमुचितं भगवत्पात्रादानं तव' इति । सा तूवाच —' नाहं जाने भगवत्पात्रमिति । किन्त्वस्य विप्रनारायणस्य दूतो रम्यजामातृनामा विप्रनारायणदत्तमिदमित्युक्त्वा मद्धस्ते प्रायच्छत् । एतदेवाहं जाने, नान्यत् ' इति ।

विप्रनारायणस्तु नरपतिनानुयुक्तः प्राह — ' नाहं कनकभाजननामापि जाने । दुर्गततमस्य मम का नाम दूतप्रसक्तिः ! सर्वमेतन्मृषा' इति । नरपतिः अप्रतिपद्यमानो निर्णयं दापयित्वा कनकभाजनं देवाराधनाय अनुगुणदण्डादानेन मोचयित्वा वारवनितां विप्रनारायणं पुनः परीक्षापुरस्सरं शिक्षणाय निक्षिप्य कारायां स्वभवनमयासीत् ।

तावदेव पुरुषकारभूता श्रीरुवाच नारायणम्—'इतः परं विप्रनारायणो भवतो लीलोपकरणं माभूत् ; किन्तु दयाविषयो भूयात् ' इति । भगवांस्तु स्वप्ने प्राह राजानं—'नायं चोरो विप्रनारायणः । नैव जानाति कनकभाजनवार्तामपि । योऽस्य दूतो रम्यजामाता सोऽहम् । मदीयस्वर्णपात्रदानेचैतत निमित्तम् । यदस्य तादात्विकं दुःखं प्रशाम्यति । प्रबुद्धो मद्गुणव्यामुग्धो भविता । स्वर्णस्तेयापवादेन कारागृहस्थित्या चास्य प्रारब्धं कर्म निर्वर्तिष्यते इति । तदेनं दुराचारेभ्यो निवर्तय । वेश्याधनं तत्पात्रं तस्या एव दापय ' इति च ।

राजा तु प्रातरुत्थाय स्वप्नवृत्तान्तमाख्याय परिवारेभ्यः विप्रनारायणमानाय्य काराया मोचयित्वा विस्मेरचेताः प्रणम्य सान्त्ववचनैः प्रसाद्य क्षामयामास स्वापराधम्। विप्रनारायणस्तु 'संसारबन्धस्थितिमोक्षहेतुः' 'भयकृद्भयनाशनः' इति बन्धहेतुं मोक्षहेतुञ्च तमेव भगवन्तं भावयन्निरन्तरम् अनुतप्यमानस्स्वदुराचारस्मरणेन स्वात्मानमर्पयन्मुहुर्मुहुः निर्हेतुकायै भगवत्कृपायै सर्वप्रायश्चित्तं भगवद्भक्तपादोदकं निषेव्य निष्कल्मषो बभूव। यत्रेदमुच्यते—

" एतत्समस्तपापानां प्रायश्चित्तं मनीषिभिः।
निर्णीतं भगवद्भक्तपादोदकनिषेवणम्॥ "    इति।

अथास्य पुरुषकारपूर्वकभगवन्निर्हेतुकदयाविषयीकारलब्धार्थपञ्चकज्ञानतत्साक्षात्कारस्य सर्वं नवमिवाभवत्। तथाहि — ग्रामकुलादिप्रयुक्तं विप्रनारायण इति नाम निववृते। 'तोण्डरडिप्पोडि' 'भक्ताङ्घ्रिरेणुः' इति दास्यनाम प्रववृते। यत्तावदुच्यते प्रमाणशतैः।

" यस्य मूर्ध्नि स्थितं यावद्वैष्णवाङ्घ्रिरजश्शुभम्।
गङ्गादिसर्वतीर्थानि तावत्तिष्ठन्त्यसंशयम्॥
निरपेक्षं मुनिं शान्तं निर्वैरं समदर्शनम्।
अनुव्रजाम्यहं नित्यं पूयेयेत्यङ्घ्रिरेणुभिः॥ "

'मायन्तमरडिनीरुकोण्डणिय' 'पादतूलिपडुदलाल्' 'तोण्डरडिप्पोडि आडनां पेरिल्' इत्यादिभिः।

*अयं तु 'तिरुमालै' 'तिरुप्पळ्ळियेळुच्चि' इति प्रबन्धद्वयं सकलतत्त्वार्थ*बोधकं निखिलचेतनोज्जिजीवयिषयानुजग्राह।

रामदूतवद्रामानुजवच्छठकोपवत् च प्रादुरासीदनन्यमोग्यत्वाकारः। यदुच्यते स्वस्ववचनैनैव तैः।

'स्नेहो मे परमो राजन्! त्वयि नित्यं प्रतिष्ठितः।
भक्तिश्च नियता वीर! भावो नान्यत्र गच्छति॥'

इति हनूमतः।

'न देवलोकाक्रमणं नामरत्वमहं वृणे।
ऐश्वर्यं वापि लोकानां कामये न त्वया विना॥'

इति लक्ष्मणस्य। 'नल्लीडुपेरिनुं कोळ्ळदेप्णुमो' इति शठकोपस्य च। एतत् चास्यैव सूक्त्या ज्ञायते। 'पच्चैमामलैपोल्' इत्यादि 'इन्दिरलोकमाळुम् अच्चुवैपेरिनुं वेण्डेन्' इति। भगवतस्त्ववशीकरणक्रममनुसन्दधतोऽस्य विस्मितचेतसो भगवति कृतज्ञतैव सततं देहयात्राभूत्। तदपि स्वोक्त्यैव ज्ञायते — 'मादरार्कयल्कणेन्नुं वलैयुळ् पट्टळुन्दुवेनै, पोदरेयेन्नुशोलि पुन्दियिल् पुहुन्दु तन्पालादरं पेरुहवैत्तवळहन्' इति।

यमकिङ्करसंवादसिद्धं वैष्णवत्वञ्चास्य निष्पन्नमिति च स्वयमेव सगर्वमाह—'नमन्तमर्तलैहळ्मीदे नावलिट्टुळितरुहिन्त्रोम्' इति। चतुर्विंशतितत्त्वात्मके शरीरे संन्यवर्ततात्मबुद्धिरिति चाह —'पुरंशुवरोट्टैमाडम्' इति। असिद्धान्तयच्च भागवतदास्यमेवात्मना स्वरूपमिति 'अडियरोर्कु' इति। निश्चकर्ष च पुरुषार्थस्वरूपं भागवतकैङ्कर्यमेवेति स्वप्रबन्धोपसंहारे 'उन्नडियार्कॢ् पड्डचाय्' इति।

श्रीरङ्गनाथविषय एव नियतैकपतिव्रतात्वं त्वस्यैवासाधारणम्। यतोऽस्य द्वयोरपि प्रबन्धयोः दिव्यदेशान्तरगतदैवतस्य नामापि न कीर्तितम्।

देवदेव्यपि सर्वमिमं वृत्तान्तमनुभूय निहीनतरजन्मन्यपि स्वस्यां विप्रनारायणसंबन्धाधीनं भगवता स्वयमेव सुवर्णपात्रप्रदानादिकं प्रसादमनुकूलं भावयन्ती परमार्थतो निर्विण्णा पिङ्गलेव सर्वस्वं भगवद्भागवताधीनं कृत्वा सिद्धरसघुटिकास्पृष्टलोहन्यायेन स्वयमपि भगवन्मन्दिरसंमार्जनोपलेपनपुष्पाहरणनामसङ्कीर्तनादिकैङ्कर्यनिरता बभूव।

अत्र यद्यपीयमाशङ्का समुदियात् । एतादृशहेयविषयासक्तस्य वर्णाश्रमाचारविभ्रष्टस्य विप्रनारायणस्य कथमर्चारूपेण प्रतिष्ठापनम् । कथञ्च पूजाप्रवर्तनम् ? इति । तथापि भगवत्संश्रयणराजकुलमाहात्म्यान्न काप्यनुपपत्तिः । तथा हि—

शरीराणामचेतनत्व-विनाशित्व-व्याध्यादिग्रस्तत्व-मलमूत्र-मांसासृगादिपूरितत्व-तल्लेपतच्छौचतत्तत्पूर्ववासनानुगुणकार्याणीत्यादि सर्वमाचतुराननपिपीलिकं विवेकिनामविवेकिनां तिरश्चामपि समानम् । तादृशप्रतिष्ठापूजादिप्रयोजको विशेषः पुनः भावनात्रयान्वयविरहपूर्वकनिरन्तरभगवद्ध्यानप्रणामादिरत्यर्थप्रियः । तदुक्तम्—

" दुराचारोऽपि सर्वाशी कृतघ्नो नास्तिकः पुरा ।
समाश्रयेदादिदेवं श्रद्धया शरणं यदि ॥
निर्दोषं विद्धि तं जन्तुं प्रभावात्परमात्मनः ॥ "   इति ।

अस्मिन्प्रमाणवचने 'पुरा' इति पदं दृश्यते । तदपि परिहृत्यानुगृहीतं भगवता गीताचार्येण ।

" अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥ "   इति ।

पूजाविषये भगवानेवाह संहितायां—

" भक्तिरष्टविधा ह्येषा यस्मिन् म्लेच्छेऽपि वर्तते ।
तस्मै देयं ततो ग्राह्यं स च पूज्यो यथा ह्यहम् ॥ "

इति स्वसमानतया पूज्यत्वं तस्य । किं बहुना ? श्रुतिरप्याह —

" यस्य देवे परा भक्तिः यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ "   इति ।

इति श्रीभक्ताङ्घ्रिरेणुचरितम्

# श्रीपाणसूरिचरितम्

कवेरजासलिलसंपर्कवान् समीरणो यत्र यत्र सञ्चरति तत्रत्याना मुक्ति करगतैव । किमु वक्तव्यं तत्तीरवासिनाम् । तत्रापि श्रीरङ्गक्षेत्रपरिगतायाः तस्याः ।

एवं भूतायास्तस्याः परिसरे 'निचुलापुरी' ( उरैयूर् ) इति प्रसिद्धा महोन्नतहर्म्यसौधप्रासादादिपरिष्कृता काचिदस्ति नगरी । तस्याञ्च दिनकरकुलप्रदीपो धर्मवर्माभिधः परमधार्मिकश्चोलभूपतिरवनीं पालयन्नासीत् । तस्य तु काचन कन्या समजनि । या किल नीलादेव्यंशजा भगवन्तं श्रीरङ्गनाथमेव पतिं वरयामास । पाणिञ्च जग्राह ।

अत एव सा 'निचुलापुरी देवी' (उरैयूर्नाच्चियार्) इत्येव प्रसिद्धा बभूव । प्राप्ततारुण्या कदाचित्सखीभिस्सह विहरन्त्युपवने यदृच्छया मृगयाव्याजेनागतं श्रीरङ्गनाथमवलोक्य तदेकासक्तचित्ता रणरणकेन परिपीडिता निर्लज्जा स्वपितरमुवाच — 'तात ! नाहमन्यं मनुजपशुं वृणे । भगवते रङ्गनाथायैव मा प्रदेहि । नो चेन्न जीवामि' इति ।

स तु बहुशो विचिन्त्य निर्णयमनधिगच्छन् रङ्गनेतुस्सन्निधिमुपगम्य वृत्तमिदं विज्ञापयामास । भगवानादिदेश— 'भवद्दुहितरं मह्यमेव प्रयच्छ । अहमेव तस्याः पाणिं ग्रहीष्यामि । माभूत्ते चिन्ता' इति । राजा तु प्रहर्षपरवशः स्वौदार्यानुगुणं पात्रानुगुणं विभवानुगुणं च धनकनकमणिवस्त्राभरणवाहनासनदासीदासादिपुरस्सरं स्वदुहितरं भगवते यथाविधि प्रतिपाद्य महता विजृम्भणेन विवाहमहमकरोत् ।

एवं स्थिते तस्यां निचुलायां कलियुगे द्विचत्वारिंशदुत्तरत्रिशतसङ्ख्याकवत्सरेष्वतीतेषु दुर्मतिसवत्सरे ( क्रि. पू. २७६० ) वृश्चिकराशिगते सवितरि

रोहिणीसञ्ज्ञे तारानाथे भगवतः श्रीवत्सांशः पाणसूरिरवातरत् पञ्चमे वर्णे। स च जायमानकालिकभगवत्कटाक्षपात्रतया रजस्तमोरहितप्रवृद्धशुद्धसत्त्वगुणः स्वयमेवोपायोपेयभूतनारायणपरायणः, नारद इव कैशिकपुराणप्रतिपादितयागदोषलब्धब्रह्मरक्षस्त्वपरिहारकरपश्चिमगीतमहिमा, भागवत इव च भगवद्गुणगानैकनिरतः, सर्वदा सामगानपरायणो नित्यसूरिरिवाभवत्।

किन्तु स्ववर्णधर्मानुगुण्येन कवेरजास्रोतोद्वयमध्यान्तरीपं कदाप्यस्पृशन् पदा दक्षिणकावेरीदक्षिणतीरे रङ्गनाथाभिमुखो निमीलितनयनो वीणापाणिर्गायन् गुणान् भगवतः कीर्तयन्नामानि भक्तिपरवशो विस्मृतस्वतनुः स्थूणावत्तस्थौ।

भगवानपि ज्ञानिनस्त्वात्यर्थप्रियतया तद्विश्लेषमसहमानो निरङ्कुशस्वातन्त्र्येण लोकसारङ्गमहामुनीन्द्रमेवमादिदेश स्वप्ने—'महामुने! दक्षिणकावेरीदक्षिणपारे तिष्ठन्तमिममन्तरीपं पदाप्यस्पृशन्तं मद्भक्ताग्रेसरं श्रीपाणसूरिम् अविजुगुप्समानो भवत्स्कन्धमधिरोप्य मत्सकाशमानय' इति।

लोकसारङ्गमहामुनिरपि यथानियोगं ब्राह्मे मुहूर्ते उत्थाय कृतयथोदितस्नानाद्याह्निकः श्रीपाणसकाशं गत्वा दण्डवत्प्रणिपत्य भगवदाज्ञां विज्ञापयामास। यदा पाणसूरिः स्वनैच्यानुसन्धानेन कावेरीमध्यान्तरीपं पदा स्प्रष्टुं नैच्छत्, तदा लोकसारङ्गमहामुनिः स्वयं स्कन्धमारोप्य पाणसूरिमातिवाहिकोऽमानवपुरुष इव मुक्तचेतनं दिव्यास्थानमण्डपतलमिव श्रीरङ्गनाथदिव्यविमानमानिनाय।

भगवानपि नित्यदरिद्राय निधिमिव श्रीपाणसूरये स्वदिव्यमङ्गलविग्रहमापादचूडमनवयवशस्सन्दर्शयामास। पाणसूरिरपि सत्स्वपि मातुस्सर्वावयवेषु स्तनन्धयस्स्तनमेव यथा वदनेन गृह्णाति, तथा सर्वशेषिणोऽवयवेषु सत्स्वप्यन्येषु शेषभूतेन प्रथममाश्रयत्वाद्भगवतः पदकमलमेव जग्राह प्रथमं चक्षुषा मनसा वाचा च।

तदनुभवमात्रेणातृप्तः शेषित्वशरण्यत्वप्राप्यत्वादिभिरूर्ध्वमाकृष्टकरणत्रयोऽनुभूय सर्वावयवान्यथानुभवम् 'अमलनादिपिरान्' इत्यादिपद्यदशकपरिमितं दिव्यप्रबन्धं दरिद्राणां निधिमिव संसारिणामापद्धनं निधाय तस्मिन्नेव श्रीरङ्गनाथे तेनैव शरीरेण सायुज्यमवाप ।

उशीरधारी भोगी पुरुषः उशीरसंपृक्तां मृदमनवधूयैव यथा धारयति गन्धलोपभिया तथा भगवानपि ज्ञानिनं सविग्रहमेव परिगृह्णाति । उक्तं हि भगवता शौनकेनार्चारूपस्यैव प्राप्यत्वम्—

"तामर्चयेत्तां प्रणमेत्तां भजेत्तां विचिन्तयेत् ।
विशत्यपास्तदोषस्तु तामेव ब्रह्मरूपिणीम् ॥" इति ।

## इति श्रीपाणसूरिचरितम्

## ŚRÌ PĀṆASŪRI



श्रीपाणसूरिः — तिरुप्पाणाळ्वार्

वृश्चिके रोहिणीजातं श्रीपाणं निचुलापुरे ।
श्रीवत्सांशं गायकेन्द्रं मुनिवाहनमाश्रये ॥

# ŚRĪ PARAKĀLA SŪRI



श्रीपरकालसूरिः — तिरुमङ्गै आळ्वार्

वृश्चिके कृत्तिकाजातं चतुष्कविशिखामणिम् ।
षट्प्रबन्धकृतं शार्ङ्गमूर्तिं कलिहनं भजे ॥

# श्रीपरकालसूरिचरितम्

परकालसूरिस्तु तिरुवालिजनपदे 'तिरुक्कुरैयलूर्' इति ग्रामे अतीतेषु कलियुगे सप्तनवत्युत्तरत्रिशतसंख्याकेषु अब्देषु (क्रि. पू. २७०५) नलाब्दे वृश्चिकराशिगते सवितरि कृत्तिकासङ्गते निशानाथे भगवतः शार्ङ्गांशो म्लेच्छकुले नीलनाम्नावततार।

स चाज्ञातासदं बाल्यं वयोऽतिक्रम्य प्राप्तयौवनोऽत्यन्तविषयप्रवणः करधृतखड्गो युद्धे चोलभूपतिसमाश्रयेण पराक्रान्तः 'जलोपरि चरिष्णुः' 'छायानिलयनः' 'फूत्कारमुद्राभेदनः' 'वाचाटः' इति चतुर्भिर्मन्त्रिभिः नृत्यतेव तुरगेण, ऐरावतसदृशेन मत्तमतङ्गजेन च परिसेवितः चोलभूपतिना कश्चन देशाधिपः सेनानायकश्चाकारि।

एवंस्थिते तस्मिन्नेव तिरुवालिजनपदे कस्मिंश्चिदतिमनोहरे सरोरुहसरोवरे कासु चिदप्सरस्सु प्रत्यहमागत्य जलविहारमनुभवन्तीष्वेकस्मिन्दिवसे तासु काचित् कुमुदकुसुमापचायनिमित्तेन विलम्बिता ताभिश्चैकाकिनी परित्यक्ता मानुषं रूपमास्थाय तत्रैवावतस्थे। तावत्येव काले 'तिरुनाम्गूर्' इति दिव्यक्षेत्रनित्यवासिनं भगवन्तं सेवमानः कश्चिच्चिकित्सकभागवतः स्नानार्थमागत्य तां दृष्ट्वा पप्रच्छ—'कुतोऽत्रैकाकिनी तिष्ठसि' इति।

साऽब्रवीत्— 'पूज्य! सुमङ्गला नाम काचनाहमप्सराः रूपातिशयगर्विता स्वसखीभिस्समं हिमवति गिरौ विशेषान्पश्यन्ती कस्मिंश्चित् सिद्धाश्रमे भगवति कपिलमहर्षौ भगवद्वैभवमवबोधयति सतीतरेभ्यः कञ्चन कुरूपं सिद्धपुरुषं दृष्ट्वापाहसम्। कुपितः कपिलः शशाप—'रूपगर्विते! त्वं मानुषी भूत्वा नीचभार्या भविष्यसि' इति।

अत्यनुतप्तहृदया चाहमतिदीना प्रसीद भगवन्निति मुहुः प्रार्थये । प्रसन्नमना महर्षिरन्वग्रहीत् मां 'बाले ! जगदवनाय भगवतः शार्ङ्गांशः परकालनामा देशाधिपतिरास्ते । तस्य सहधर्मचारिणी भूत्वा तं परमभागवतं विधत्स्व । तव सर्वा न्यूनता परिहृता भविष्यति ' इति । विदितवृत्तान्तो भिषग्वरोऽनपत्यस्तामानीय स्वपत्न्यै दत्वातिप्रीत्या पुष्पंस्तां कुमुदापचायन्याजलब्धतया ' कुमुदवल्लीं ' नाम्ना चकार । तस्याः अतिमानुषं सौन्दर्यलावण्यादिकं केचित् परकालाय न्यवेदयन् ।

नीलस्त्वतिचपलचित्तस्तत्क्षणमागत्य भिषग्वरगृहं तेन सह संभाषमाण आस्त । तदैवाकस्माद्गेहान्तःप्रदेशात् मेघान्तःप्रदेशादिव तडिल्लतां कुमुदवल्लीं निर्गतामालोक्य विस्मितो विभ्रान्तचित्तः ' भिषग्वर ! अनपत्येन भवता कुतो लब्धेयं देवतासुता ? ' इत्यपृच्छत् । चिकित्सकस्तु तदुपलब्धिक्रमं सर्वमुक्त्वा 'अज्ञातकुलगोत्रेयं प्राप्तयौवना कस्मै दातव्येति मे महती चिन्ता ' इत्युवाच ।

नीलस्तु बहुधनकनकवस्त्राभरणादिप्रदानेन प्रलोभ्य तौ दम्पती ' मह्यमेवैनां दत्तम्' इति निर्बबन्ध । तावनुमेनाते । तावत्कुमुदवल्ली प्रोवाच पितरौ —' पञ्चसंस्कारसंस्कृतात् श्रीवैष्णवादन्य नाहं वृणे ' इति । तत् श्रुत्वा नीलोऽपि तद्व्यामोहेन तथेत्यभ्युपगम्य सपदि तिरुनैयूर्पूर्णनामानं श्रीवैष्णवमुपगम्य संप्रार्थ्य प्रयत्नेन तेन पञ्चभिस्संस्कारैस्संस्कृतः कुमुदवल्ल्यै दर्शयामास आत्मानम् । सा पुनरब्रवीदेनं— ' यावदेकं संवत्सरं प्रतिदिवसमष्टोत्तरसहस्रश्रीवैष्णवतदीयाराधनं तत्पादोदकसेवनं च विना नाहं भवति भर्तृभावं विसृजामि ' इति ।

परकालस्तु सर्वप्रयत्नेनापि तामनुबुभूषुः तथेति प्रतिज्ञाय प्रतिज्ञानुगुणं सर्वस्वव्ययेनापि तदीयाराधनं निर्वर्तयन्नासीत् । अथ चोलप्रभवे देयं करद्रव्यमपि तदीयाराधनायैव विनियुक्तमभूत् । चोलभूपस्तु करादानाय भृत्यान् प्रेषयामास ।

अद्य श्वो वा सायं प्रातः दास्यामीति कालं निनाय नीलः। अविनिर्विद्धस्तु तैस्तान्वलान्निष्कासयामास। राज्ञा प्रेपितस्सेनापतिरपि चतुरङ्गबलपरिवृतः समागत्य तुरगाधिरूढेन खड्गहस्तेन नीलेन पराजितो वृत्तं राज्ञे व्यजिज्ञपत्।

चोलभूपः श्रुत्वातिकुपितस्स्वयमेव चतुरङ्गबलमादाय समागम्य युद्ध्वा नीलेन पराजितस्साम्ना तं स्ववशं कृत्वा 'तव सर्वेऽपराधाः मया क्षान्ताः। देयं करद्रव्यमात्रममात्येऽस्मिन् देहि' इत्युक्त्वा नीलममात्याधीनं कृत्वा स्वनगरमेवायासीत्। सचिवोऽप्येनं कस्मिंश्चिद्देवालये कारायां निदधे। परकालोऽप्यतीवार्तो दिनत्रयमुपवसति स। तदा वरदराजः स्वप्ने समागम्यैनमेवमुवाच — 'काञ्चीमायाहि। चोलाय देयं करद्रव्यं दास्यामि' इति। नीलः प्रातरमात्यमाह — 'काञ्चीनगरे किञ्चिद्धनं मदीयमस्ति। तत्रागच्छसि चेद्दास्यामि करम्' इति।

अमात्यस्तु राज्ञे विज्ञाप्यानुमतस्तेन सारक्षकवर्गं निनाय नीलं काञ्चीम्। धनस्थानमजानाने दूने दीने च नीले करुणानिधिरर्थितार्थपरिदानदीक्षितो वरदस्स्वप्ने प्रोवाचास्मै धनस्थानं सचिह्नम्। नीलोऽपि वेगवतीतीरे निर्दिष्टे स्थाने खात्वा धनमादाय राज्ञे देयं करं दत्वा अवशिष्टं तदीयाराधनाय निचिक्षेप।

चोलनृपोऽपि धनागमवृत्तान्तममात्यमुखेन यथातथं श्रुत्वा विस्मितः 'महानयं भगवत्प्रपन्नः। यतोऽस्यार्तस्य धनं द्रौपद्याः वस्त्रमिवाभिवर्धते। एवञ्चास्माकं कोशागारे न स्थातुमर्हति' इत्युक्त्वा नीलमानाय्य, क्षामयित्वा अपराधं तद्द्रव्यं देवब्राह्मणसन्तर्पणायैव विनियोजयामास।

अथ नीलो धनाभावात्पथिकानां धनान्याहर्तुमारेभे। ततो भगवानेवम् अचिन्तयत्—'अकार्यशतं कृत्वापि भागवताराधनतत्परोऽयं चरमपुरुषार्थनिष्ठः। इदमेव सुकृतं व्याजं विधाय विशेषतोऽनुगृह्य स्वीकुर्यामेनम्' इति। अथ

नीलो यत्र पथिकानां धनमपहर्तुं सपरिकरो निलीनो वर्तते, तमेव प्रदेशं 'तिरुमणं कोल्लै' नागानमाजगाम भगवान् श्रिया सह ब्राह्मणनववधूवरवेषधारी सद्योविवाहानुगुणसर्वाभरणभूषितः समुचितबन्धुजनपरिवृतः बहुधनकनकादि-यौतकद्रव्यसमृद्धः ।

परकालस्तु तादृशं जनसमुदायं दृष्ट्वा बहुद्रव्यलाभाशया स्वपरिवारेण तान्परितः आक्रम्य धनकनकवस्त्राभरणादिकं सर्वमपहृत्यावशिष्टमेकं वरस्य पादाङ्गुष्ठाभरणं दद्भिर्विदश्यादद्दे । ततस्सर्वं वस्त्राभरणादिकं ग्रन्थीकृत्य भूतला-द्धारमुद्धर्तुमक्षमः कुपितो ब्राह्मणवररूपिणं भगवन्तमेवमब्रवीत्—'भो ! ब्राह्मण ! यः कोऽपि मन्त्रोऽनुसंहितस्त्वया, यद्बलाद्धार उद्धर्तुं न शक्यते । त्वरितमुप-संहर मन्त्रम्' इति ।

भगवांस्तु 'अस्ति स मन्त्रः, यदि कुतूहलमुपदेक्ष्यामि ते' इत्युक्त्वा तत्कण्ठमालिङ्गयोपांशूपदिदेश दक्षिणश्रोत्रे मन्त्रम् । यः खलु ऋगादिवेद-चतुष्टयादिसकलशास्त्रार्थगर्भः मुमुक्षूणामपुनर्भवकाङ्क्षिणां संसारार्णवतारकः, ऐहिकामुष्मिकैश्वर्यकैवल्यभगवल्लाभसाधकः, अष्टवर्णात्मकः, पदत्रयमितः, दत एव क्रमेण स्वरूपोपायपुरुषार्थयाथात्म्यनिष्कर्षक, व्यापकमन्त्रेष्वपि त्रिष्वर्थपूर्त्या समुत्कृष्टः वेदवैदिकादिशिष्टजनाग्र्यैरादृतश्च ।

गीताश्रवणानन्तरं तदर्थदर्शनकुतूहलिने पार्थाय यथा विस्रम्भाय विश्वरूपं प्रादर्शयद्गीताचार्यः तथा मन्त्रोपदेशमात्रेणावृतः परमपुरुषो मन्त्रार्थ-भूतं स्वस्वरूपगुणविग्रहविभूतिप्रभृतिकं प्रादर्शयत्परकालाय । तथा हि । कनक-गिरिमिव गरुडमधिरूढः तडितेव श्रिया समालिङ्गितः नीलजलधर इव सकल-तापहरः सवर्णश्च सुदर्शनपाञ्चजन्यादिदिव्यायुधधरः किरीटादिनूपुरान्तदिव्य-भूषणभूषितसर्वावयवः, कारुण्यवात्सल्यसौशील्यसौलभ्यौदार्यादिकल्याणगुणगण-प्रकाशकेन कोटिसूर्यप्रकाशेन दिव्यमङ्गलविग्रहेण प्रकाशयात्मानं, स्वविशेष-

कटाक्षेण तस्याज्ञानान्यथाज्ञानविपरीतज्ञानसंशयादीन्निश्शेषतः सवासनं परिहृत्य दिव्यज्ञानप्रदीपञ्च प्रकाशयामास।

तेन च साक्षात्कृत्य यथावस्थिततत्त्वहितपुरुषार्थांस्तदनुभवपरीवाहरूपान् 'पेरियतिरुमोऴि' 'तिरुक्कुरुन्दाण्डहम्' 'तिरुनेडुन्दाण्डहम्' 'तिरुवेऴुकूत्तिरुक्कै' 'शिरियतिरुमडल्' 'पेरियतिरुमडल्' इति द्राविडभाषामयान् षट्प्रबन्धान् षडङ्गानि शठकोपमुनीन्द्रानुगृहीतप्रबन्धचतुष्टयरूपवेदचतुष्टयस्य अनुजग्राह जगदुज्जीवनाय। तेन च आशु-मधुर-चित्र-विस्ताराख्य-चतुर्विधकाव्यरचनाचतुरतया 'चतुष्कविशिखामणिः' इति प्रथामवाप।

ततश्च तस्मिन् परकाले पत्नीपरिवारादिभिस्सह पिरिदि-बदरिकाश्रम-सालग्राम-नैमिशारण्याहोबिल-शेषाचलादिदिव्यक्षेत्रेषु तत्तद्दैवं तत्प्रतिपादक-द्राविडश्रीसूक्तिभिस्स्तुवति, क्रमेण चोलमण्डलं प्रविष्टे, 'चतुष्कविशिखामणिः जयति' 'परकालो जयति' 'परवादिमत्तगजकण्ठीरवो जयति' इत्यादि विरुदावलीभिरुद्घुष्यमाणे संबन्धाख्यस्य कस्यचित्कवेः शिष्या आगत्य 'अस्मद्गुरुमनिर्जित्य इयं विरुदावली न योग्या भवतः' इति निरवभ्नन्।

ततस्तैस्सह तत्र जगाम यत्र संबन्धनामासीत्। तयोः परस्परविवादे निश्चिते परकालस्य वदनाद्वाण्येव न निस्ससार। ततश्चाचिन्तयत्कारणम् — 'अयं ग्रामश्शैवमयः विष्णुदेवालयो वा विष्णुप्रतिमा वात्र नास्ति' इति। ततः तत्रत्यायाः कस्याश्चिद्वैष्णव्याः गृहमासाद्य तामर्थयित्वा वैष्णवीं प्रतिमां, तद्गृहमादाय नवनीतचोरविग्रहं संबन्धस्य पुरतो वादाय सिद्धोऽभवत्। ततस्संबन्धः विचित्रकाव्यं निर्माय पपाठ। परकालस्तु तत्र काव्ये बहून् दोषानुद्घाटयामास। 'तर्हि त्वयैकं काव्यं निर्मीयताम्' इति संबन्धेनोक्तः प्राह 'ओरुकुरळाय् इरुनिलम्' इत्यादिपद्यदशकम्। दशमपद्यान्ते स्वोत्कर्षप्रतिपादकं भागञ्च

'आलिनाडनल्लमारि अरट्टमुक्कियडैयार्शीयं कोङ्गुमलर्कुळलियर्वेळ्मञ्जैवेन्दन् कोचवेल् परकालन् कलियन् शोन्न शङ्गमुहचमिळ्मालै' इति ।

तत् श्रुत्वा संबन्धस्तु मूकीभावमापन्नो विस्मितश्च भूत्वा 'भवादृशो नैवास्ति कश्चिदपि कविः । 'चतुष्कविशिखामणिः' इति बिरुदावली भवानेव अर्हति" इत्युक्त्वा प्रणम्य प्रययौ ।

अथ प्रणवाकारविमानमध्यालङ्कारभूतं प्रणवार्थभूतं स्वभक्ते विभीषणे अतिप्रीत्या तदभिमुखं शयानं श्रीरङ्गनाथं दर्शनप्रदक्षिणनमस्कारादिभिः परिसेव्य तस्य विमानमण्डपगोपुरप्राकारादीन्निर्मातुकामः तदनुकूलद्रव्यसंपादनायोपायं स्वपरिजनं पप्रच्छ । तेऽब्रुवन् — 'नागपट्टणाख्ये विहारे काचन सुवर्णमयी बुद्धप्रतिमा वर्तते । तामानीय छित्त्वा भित्त्वा युष्मन्मनोरथं पूरयत' इति ।

परकालोऽभ्युपगम्य नागपट्टणं गत्वा कस्याश्चिद्वृद्धाव्याः गृहमुपगम्य 'अत्र नगरे किं देवरहस्यम् ?' इति पप्रच्छ । सा प्रोवाच— 'अस्मिन्नगरे बौद्धालये विद्यमानायाः सुवर्णप्रतिमायाः तद्विमानस्य च निर्माता शिल्पी एतादृशे द्वीपान्तरे वर्तते इति मे श्वशुरो ब्रवीति स्म ' इति । ततश्च त्वरितमेव गत्वा सपरिजनो द्वीपान्तरं विचार्य तद्गृहं प्रत्यभिज्ञाय तद्द्वारवितर्दिकायामुपविश्य संभाषमाण आसीत् । यदा स शिल्पी भुक्त्वा ताम्बूलं गृहीत्वा द्वारवितर्दिकामाजगाम, तदायं परकाल एवमुवाच — ' अहो ! बत ! महत् कष्टमापतितं नागपट्टणस्य । बौद्धालयं विमानञ्च भित्त्वा सुवर्णप्रतिमाञ्चादाय जग्मुर्बहवस्तुरुष्काः । एतत् दृष्ट्वापि जीवामो वयम् ' इति ।

एतदाकर्ण्य स शिल्पी व्याकुलतरचित्तस्सानुतापं रहस्यं विवव्रे । ' केनेदं द्रोहिणा शिल्पिना रहस्यमभेदि ? मया तु विमानशिखरकलशस्य

अधोभागेऽन्तःशृङ्खलां संयोज्य तस्या अपरान्तः प्रतिमा सोमसूत्रस्याधस्तात् भूम्यन्तरे एकस्यां नागदन्तिकायां संयोजितोऽभूत् । एतद्रहस्यं बुद्ध्वा कथं वा केन वा प्रतिमापहृता ! ' इत्यतीव विषसाद ।

परकालस्तु रहस्यं भित्त्वा विषयं संगृह्य निर्जगाम द्वीपान्तरात् । समुद्रतीरे एकं तरणिवणिजं पूगफलराशिं तरणावारोपयन्तं दृष्ट्वा ' वयं द्वित्रिदिवसादुपोषिताः । हस्ते न किञ्चिदप्यातरोऽस्ति । पारतरणाय त्वमेव शरणम्' इत्युक्त्वा तेनानुमताः तरणिमारुरुहुः । ततः परकालः स्वहस्तस्थितमेकं पूगफलं छुरिकया द्विधा छित्त्वा फलार्धं तद्राशौ तत्समक्षं प्रक्षिप्यार्थयामास — ' एका पत्रिका विलिख्य दीयताम् । अस्मिन् पूगफलराशौ अर्धं पूगफलं त्वदीयमस्ति' इति । ऋजुबुद्धिर्वणिक् तथैव लिखित्वा ददौ ।

पारङ्गतायां तरणौ ' पूगफलराश्यर्धं देहि ' इति कलहायते स्म परकालः । 'एकपूगफलार्धमेव त्वयात्र न्यस्तम् । तदेव दीयते' इति वणिक् कलहायते स्म । ततस्तत्रत्या वणिजो मिलित्वा वणिजा लिखितां पत्रिकामादाय वाचयित्वा राश्यर्धं दापयामासुः । राश्यर्धयोग्यं मूल्यं तस्मादादाय परकालादयो निश्चक्रमुः । ततश्च नागपट्टणं प्रविश्य रात्रौ बौद्धालयं प्रविश्य कुत्रचित्कोणे निलीय स्थित्वा निशीथे सोममूलस्याधः कीलितां शृङ्खलां विस्रस्य विमानमारुह्य शिखरकलशमितस्ततः परिवर्त्य प्रक्षिप्य तद्द्वारा सुवर्णमयविग्रहमादाय रात्रौ एवान्यत्रानीनयन् ।

प्रभातात्पूर्वमेव कस्यचिद्गृहस्थस्य क्षेत्रे कृष्टे पङ्कबहुले तं विग्रहं निधाय पङ्केन प्रच्छाद्य तत्पर्यन्तस्थितस्य चिञ्चातरोरधस्तस्थुः । प्रभाते क्षेत्री हलमानीय क्षेत्रं कर्ष्टुमारेभे । परकालस्तु 'मदीयमिदं क्षेत्रम् । अपसर दूरतः । मत्पितामहेन क्रीतम् । यद्यहं क्रयपत्रं श्वः प्रभाते न दर्शयिष्यामि तर्हि त्वदीयमेव क्षेत्रं भविष्यति' इत्युक्त्वा तत्रैवातिष्ठत् । स तुष्टिमचित्तो हालिको

निर्जगाम गृहम् । सूर्यास्तानन्तरं रात्रावन्यत्र नीत्वा उत्तमदेवस्यालये (उत्तमर् सन्निधि) भुवि निचख्नुः ।

ततश्च नागपट्टणे हैमप्रतिमाहीनं शून्यमालयं दृष्ट्वा प्रतिमान्वेषणं महता प्रयत्नेन प्रयासेन च कृत्वाप्यलब्धमनोरथास्तद्भक्ताः निर्वेदमात्रशरणाः बभूवुः । तदनु परकालकविः कालक्रमेण तां सौवर्णीं प्रतिमां रहसि किञ्चित्किञ्चिच्छित्त्वा भित्त्वा विक्रीय तन्मूल्येन श्रीरङ्गक्षेत्रे मण्डपप्राकारगोपुरादीन्निरमापयत् । तावतापि कर्मकरेभ्यो देयस्य भृतिद्रव्यस्यापर्याप्ततया तैरतिनिर्बद्धः परकालकविः तान् सर्वान् प्लवमारोप्य कवेरजास्रोतोमध्यमानीय निपात्यामारयत् ।

तदनु तद्बन्धुभिराक्रुष्टोऽयं भगवदाज्ञया तान् सर्वान् स्नातान् धृतोर्ध्व-पुण्ड्रान् रङ्गमन्दिरमानीय भगवत्सन्निधावाह्वापयत् मृतांस्तत्तद्बन्धून् प्रत्येकं तत्तन्नामग्रहणपूर्वकं तैस्तैः । मृतास्तु तद्बान्धवाः प्रोचुः तेन तेनैव कण्ठस्वरेण 'भो ! भो ! बान्धवाः ! मैनं महात्मानं परकालकविं निर्बध्नीत यया कयापि विधया । यदनुग्रहात्कर्मज्ञानभक्त्यादिसाधनैरप्यलभ्यं भगवतस्सायुज्यमलप्स्महि वयमकिञ्चनाः' इति ।

अथ ते नमस्कृत्य भगवन्तं परकालकविं च यथायथं निश्चक्रमुरतीव-मुदिताः । एवमादिभिर्दिव्यचरितैः स्वविरचितैः षड्भिः प्रबन्धैः स्वभक्त-प्रतिष्ठापितया स्वावतारस्थलस्थया स्वदिव्यमूर्त्या च जगदुज्जीवयन् अद्यापि भुवमलङ्करोति भगवान् परकालकविः ।

## इति श्रीपरकालसूरिचरितम्

# श्रीकाञ्चीपूर्णचरितम्

श्रीमत्काञ्चीमुनिं वन्दे कमलापतिनन्दनम् ।
वरदाङ्घ्रिसदासङ्गरसायनपरायणम् ॥
देवराजदयापात्रं श्रीकाञ्चीपूर्णमुत्तमम् ।
रामानुजमुनेर्मान्यं वन्देऽहं सज्जनाश्रयम् ॥

एकशतोत्तरचतुस्सहस्रसंख्याकेषु संवत्सरेष्वतीतेषु कलौ युगे शोभकृत् वत्सरकुम्भमासे मृगशीर्षर्क्षसयुते शुभे दिवसे काञ्चीपूर्णनामा समजनि तुण्डीरमण्डले ( इदानीन्तनमद्रास् नगरान्तर्गतपूनमल्लि ) पूविरुन्दमल्ल्याख्ये पुरवरे चतुर्थवर्णे भागवतनिष्ठागरिष्ठायाः शबर्याः अंशेन । यश्च विदुर इवाज्ञानविधुरस्तत्त्ववेत्ता ज्ञानी च, लक्ष्मण इव निजशेषभावप्रकटीकृतदास्यरुचिः, प्रह्लाद इव जन्मवैष्णवः, हेतिराज इव भगवत्सदामङ्गलाशासनपरः, शक्र इव गुर्वनुवर्तनैकशीलः, पितामह इव महितदेवराजश्च ।

भागवतोत्तमोऽयं सर्वेश्वराङ्घ्रियुगलध्याननिष्ठगुरुवरिष्ठपरमेष्ठ्यध्वरवीतिहोत्रावतीर्णस्य श्रीकरिगिरिनाथस्य तापशान्तये शैत्योपचारमाचरन् सुगन्धशीतलतोयसंपृक्तेनोशीरमयतालवृन्तेन, अशेषशेषवृत्तिनिर्वर्तननिरूढस्वस्वरूपलाभः, अनवरतस्वगुरुवरयामुनमुनिभावनया पावितान्तरङ्गः, कालमतिवाहयामास । अपि च निर्हेतुकया भगवत्कृपया स्वनिष्ठाकाष्ठया च द्विरदाद्रिशेखरं वरदं साक्षात्पश्यन्, तेन सह संभाषमाणः तमपि वाचालयन् परितुष्टान्तरङ्ग आसीत् ।

यदा च यादवप्रकाशः श्रुतीनां विशिष्टाद्वैतपरतया व्याख्यानमभेदश्रुतीनां रामानुजमुखादेव स्वशिष्यमपि तं निरकासयत् । सोऽपि सन्तुष्ट एवागत्य गृहं निवेदयामास स्वजनन्यै । सा उवाच — 'पुत्रक ! अलमेता-

वताधीतेन । भगवतो वरदस्यान्तरङ्गभूतं श्रीमन्तं गजेन्द्रदासमुपसद्य तदुक्तम् अनुतिष्ठ' इति । सोऽपि तदनुवर्तनपरो भूत्वा समये प्रार्थयामास । 'क्रियताम् इति मां वद' इतिवत् 'किं कार्यं मया दासभूतेनेति भवन्तो नियमयन्तु माम्' इति । सोऽप्यवदत् — 'यज्ञवेदीसंभूतस्य तापशान्त्यै शालकूपशीतलतीर्थं यदाह्रियते नित्यं भवता तदस्यैवाराधनसमयोपयुक्तं भवतु' इति । ततः प्रभृति तत्कैङ्कर्यमविच्छिन्नमातनोद्रामानुजार्यः ।

अन्यदा रामानुजार्यः श्रीयामुनमुनिदर्शनार्थं श्रीरङ्गं गतः । तदैव परमं पदं गतो यतिसंस्कारसंस्क्रियमाणः आसीत् स मुनिः । तथाभूतमेव तं संसेव्य रामानुजार्यः दुःखितो भृशं, श्रीरङ्गनाथमप्यदृष्ट्वा काञ्चीं प्रति निववृते । तत्र काञ्चीपूर्णाय चैतद्वृत्तं निवेदितवति रामानुजार्ये, सोऽप्यतीव दुःखितः स्वाचार्याय श्रीवैष्णवसम्प्रदायानुगुणं श्रीचूर्णपरिपालनादिकं निर्वर्त्याध्ययन-महोत्सवं चाकरोत् । ततो रामानुजार्यः 'यामुनमुनेस्सकाशे'अध्ययनं कर्तव्यम्' इति काङ्क्षा मे न संपन्ना इति परितपति स्म । एतद्विज्ञाय काञ्चीपूर्णः 'वरदो हि दयानिधिरर्थितार्थपरिदानदीक्षितस्सर्वज्ञः सर्वशक्तश्च । स एव निर्वर्तयति निःशङ्कं भवदभीप्सितम्' इति समादधे ।

एवं स्थिते रामानुजार्यः काञ्चीपूर्णस्यानुष्ठानादिकं प्रभावं च विज्ञाय तदाश्रयणोद्देशेन प्रणम्य, 'स्वामिन्! आत्मनोऽस्य यथोज्जीवनं भवेत्तथानु-ग्राह्योऽयञ्जनः' इति बलात्प्रार्थयामास । काञ्चीपूर्णोऽपि 'भोः! असन्तमेव मां दयाशेवधिर्वरदस्सन्तमारचय्य स्वदास्ये न्ययूयुजत् । विश्वसन्ति हि भवन्तश्चैतद्विलोक्य । सकलगुणगणविभूषिताः भवन्तः परमवैदिकाचारनिष्ठा-प्रकारं विनिश्चित्य मामाश्रयितुमिच्छन्ति । युक्तमेतत् । तथापि नोचितमिदं वैदिकमर्यादायाः वर्णाश्रमानुगुणायाः' इत्युक्त्वा स्वाश्रयणान्निवर्तयामास तं रामानुजार्यम् ।

खिन्नोऽपि रामानुजार्यः अन्यस्मिन्नहनि 'पोनहंगैय्द् शेडे तरुवरेल्' इतिवत् परमभागवतोच्छिष्टप्रसादस्वीकारस्य परमपुरुषार्थतां भावयन् स्वयं तत्स्वीकर्तुं श्रीकाञ्चीपूर्णं स्वगृहे भोजनाय प्रार्थयामास । सोऽप्यनुमनुते स्म। हृष्टो रामानुजार्यः स्वगृहं प्रविश्य न्यवेदयत् पत्न्यै— 'सपरिकरं सव्यञ्जनं च अन्नं श्रपय भागवतभोग्यं यथा भवेत्' इति । ततश्च स्नात्वा नित्यनैमित्तिकानि निर्वर्त्य, शालकूपतीर्थं च शीघ्रमेव समर्प्य भगवते देवराजाय, स्वगृहार्चायै देवराजाय अर्पितमन्नं विनिवेद्य, काञ्चीपूर्णमाकारयितुं दक्षिणवीथ्या प्रस्थिते रामानुजार्ये, काञ्चीपूर्णोऽपि वीथ्यन्तरेण प्रस्थाय वरदं संसेव्य, रामानुजगृहं प्राप्य 'भगवतो व्यजनकैङ्कर्याय त्वरितं गन्तव्यम्' इत्युक्त्वा झडिति भुक्त्वा जगाम । ततो रामानुजार्यपत्नी भुक्तोज्झितम् उच्छिष्टपत्रं दण्डेन बहिःप्रक्षिप्य तत्स्थलं गोमयेनानुलिप्य जलेन प्रक्षाल्य स्वयं च स्नात्वा पतिं प्रतिपालयन्ती अतिष्ठत् ।

रामानुजार्योऽपि मठे काञ्चीपूर्णमपश्यन् प्रतिनिवृत्य गृहं, दृष्ट्वा च पत्नीं स्नातां 'किमिदम्!' इत्यपृच्छत् । सापि "स वैष्णवः आगत्य भुक्त्वा 'भगवतः तालवृन्तकैङ्कर्याय गन्तव्यम्' इत्युक्त्वाऽऽशु जगाम । सोऽपि अब्राह्मण इति तदुच्छिष्टपत्रं दण्डेन बहिर्निष्कास्य गोमयेन तत्स्थलमनुलिप्य शुद्धिमकरवम् । तदा शरीरे उच्छिष्टमलगत् । तदर्थं अस्नाम्" इति प्रत्यवदत् । रामानुजार्योऽपि कुपितो भार्यायै स्वामीष्टालाभादपि परमभागवते साक्षादपचारस्य करणेन नितरां खिन्नो बभूव ।

अन्यदा चैषः मठं गत्वा काञ्चीपूर्णं प्रार्थयामास— 'स्वामिन्! काश्चिदर्थान् मनसि विचिन्तयाम्यहम् । अपि नाम ते समीचीनाः भगवदभिमता वा ? इति ज्ञातुकामोऽस्मि । वरदं विज्ञाप्य तदुक्तेनोत्तरेण प्रबोधनीयः अस्मि' इति ।

तस्मिन्नेव दिवसे रात्रौ भगवते समर्प्य सकलोपचारान् तिष्ठति रहसि काञ्चीपूर्णं वरदः पप्रच्छ तम्—'किमपि वक्तुकामोऽसीव ?' इति । काञ्चीपूर्णोऽपि "भगवन् ! रामानुजः पप्रच्छ माम् — 'कांश्चनार्थान् मनसि भावयामि ? के तेऽर्थाः ? ते समीचीना वा ? भगवन्तं पृष्ट्वा बोधयन्तु माम्' इति । ब्रूहि के तेऽर्थाः ?" इत्यवदत् । वरदोऽपि दयानिधिः "सहजदास्यरसरसिकः मच्छन्दानुवर्ती स रामानुजः, यथाहं स्वतस्सर्वज्ञोऽपि सान्दीपनिसकाशेऽधीतवान् लोकसंग्रहाय तथैव बहुश्रुतवृद्धपरिसेवी विविच्य सकलशास्त्रतत्वज्ञः, मां ननु भवन्मुखेन परिपृच्छति ? अस्तु । (१) वरद एव परं तत्त्वम् (२) भेद एव दर्शनम् (३) प्रपत्तिरेवोपायः (४) अन्तिमस्मृतिर्नापेक्षिता प्रपन्नस्य (५) प्रपन्नस्यैतच्छरीरावसान एव मोक्षः (६) महापूर्ण एवाश्रयणीयः इतीमे षडर्थाः तन्मनसि भाविताः । त एव ममापि रोचन्ते" इत्यनुजग्राह ।

काञ्चीपूर्णोऽप्यतीव हृष्टः उषस्येवागत्याहूय रामानुजं 'भोः, श्रूयताम् । भगवदभीप्सिता भवन्मनसि स्थिताः अर्थाः इमे' इति तान् प्रतिबोध्य, 'अपि नाम सत्यम् ?' इति प्रपच्छ । रामानुजार्योऽपि 'आम' इत्युक्त्वा तच्चरणसरसिजयोः प्रणनामानितरसाधारण्या भक्त्या ।

काञ्चीपूर्णोऽपि भगवदभीप्सिताः एतन्मनसि स्थिताश्चार्थाः एकरूपा एव । महदिदमाश्चर्यमिति विसिष्मिये । महानयमनितरसाधारणः इति च मेने ।

*　　*　　*

श्रीयामुनार्यशिष्यं ज्ञानवितृष्णत्वभक्तिभिः पूर्णम् ।
वन्दे काञ्चीपूर्णं रामानुजसंयमीन्द्रसंसेव्यम् ॥ १ ॥

विविधविधहुतवहोद्भूतं देवराजं
　वरवरवरदन्तं वीजयंस्तालवृन्तैः ।
नवनवविभुवीक्षाभाजनं योऽभवत्तं
　भज भज मम चेतः काञ्चिपूर्णं मुनीन्द्रम् ॥ २ ॥

ŚRĪ KĀÑCĪPŪRṆA



श्रीकाञ्चीपूर्णः — तिरुक्कच्चिनम्बि

कुम्भे मृगशिरोजातं श्रीकाञ्चीपूर्णमाश्रये ।
षट्सूक्तीः यतिराजाय यन्मुखाद्वरदोऽब्रवीत् ॥

# ŚRÌ VATSACINHAMIŚRA



श्रीवत्सचिह्नमिश्रा —कूरत्ताऴ्वान्

मकरे हस्तनक्षत्रे सर्वनेत्राशसम्भवम् ।
श्रीमत्कूरकुलाधीश श्रीवत्साङ्कमुपास्महे ॥

यस्याज्ञया प्रतिदिनं स तु लक्ष्मणार्यः
शालाख्यकूपपयसा स्वयमाहृतेन ।
श्रीदेवराजविभवे रचयांबभूव
पानीयमस्यहममुं शरणं प्रपन्नः ॥ ३ ॥

वरदविभुसकाशाद्योऽप्यगच्छत् षडर्थान्
यतिपतिहृदयस्थांस्तांश्च योऽबोधयच्च ।
जगदिदमुपजीवत्यद्य यान् गद्यसूक्तान्
तमहमिह शरण्यं नौमि काञ्चीसुपूर्णम् ॥ ४ ॥

यद्भुक्तिपात्रमभवच्चिरकाङ्क्षितं च
रामानुजस्य दुरवापमभूच्च पत्न्या ।
स्वालाभतोऽपि चरमाश्रमदायि चाभूत्
तं काञ्चिपूर्णमुनिमन्वहमाश्रयेहम् ॥ ५ ॥

हृद्यैः पद्यैरष्टभिरतिभक्त्या देवराजमामन्त्र्य ।
स्तुत्वा विलीनचित्तं यश्चक्रे तं मुनिं वन्दे ॥ ६ ॥

कुम्भे मृगशीर्षभवं शीर्षेण भजे गजेन्द्रदासन्तम् ।
यत्कृतया स्तुत्यामी मुच्येमहि बन्धनात्सद्यः ॥ ७ ॥

इति श्रीकाञ्चीपूर्णचरितम्

# श्री श्रीवत्सचिह्नमिश्रचरितम्

श्रीवत्सचिह्नमिश्रेभ्यो नम उक्तिमधीमहे ।
यदुक्तयस्त्रयीकण्ठे यान्ति मङ्गलसूत्रताम् ॥

आसीत् किल हरितकुलतिलकः, सकलकलाकलापकुशलः, शीलवतामवतंसः, देहवानिव दयारसनिष्यन्दः, प्रशान्तान्तःकरणः, बाह्यकरणानामपि निर्विषयीकरणचणः, निखिलसद्गुणमणिगणरोहणगिरिः, जनक इव कर्मयोगपरिकर्मितज्ञानयोगः, प्रह्लाद इव ज्ञानिनां निदर्शनभूतः, सनन्दन इव सन्ततध्यानाशनः, वकुलभूषण इव भगवदनुभवभावितभारतीपावितवसुमतीतलः, मधुरकविरिवाचार्यसपर्यापर्याप्तः, अग्रगण्यो वैराग्यभूषणानां, निर्णेता तत्त्वानाम्, आचार्य आचार्याणां, श्रीवत्सचिह्नमिश्रो नाम ।

यः किल स्वावतारतः कीर्तिमतुलामातनोत् तुण्डीरमण्डले श्रीकाञ्चीसकाशकाशमानस्याग्रहारस्य श्रीकूराख्यस्य । यश्च समासाद्यानितरसाधारणीं प्रथामवाप कलावतीतेषु नवोत्तरैकशताधिकचतुस्सहस्रसंख्याकेषु हायनेषु सौम्यवत्सरमकरपञ्चमीगुरुवासरयुता हस्तनाम्नी तारा । येन च जातेनातीव तुतुषतुः पितरौ पेरुन्देवीदामोदरार्यौ । यस्मै च प्रददौ वेदशास्त्रप्रबन्धान् पितैव दामोदरार्यो राममिश्रापरनामा । यस्माच्च शिष्याद्गतिमन्विच्छन् रामानुजाचार्योऽपि धन्यममन्यतात्मानम् । यस्य च पाणिं जग्राह गोदाख्या (आण्डाळ्) हृदयं विद्यव धनधान्यसम्पदा समं सहधर्मचारिणी । यस्य च निकेतने चिकेन नृकेसरी नित्यमर्चनीयतयार्चारूपी भगवान् । यस्मिंश्चाचार्ये अचिरेण चरितार्थाश्चेरुः 'पिळ्ळैपिळ्ळैयाळ्वान्' 'तिरुवरङ्गत्तमुदनार्' 'नाल्रान्' प्रभृतयः छात्राः ।

तस्य चैवंविधस्यागणेयगुणगणस्यापि गुणकणिका काश्चन शीतला समुपनयन्ति मन्दमारुता इव चरित्रखण्डा । तथा हि —

सोऽयमाकर्ण्य काञ्च्यां प्रतिदिवससमुपहृतसमर्प्यमाणदेवराजसपर्यातीर्थकलश, यामुनाचार्यान्तेवासिपराङ्कुशदासदयासमासादितपञ्चसंस्कार, मीमांसायुगलप्रवचनपटीयांस, भागवतापचारदर्शनजनितजिह्वासानिष्कासितस्वदार, सपदि परिगृहीततुरीयाश्रम, श्रीरामानुजमुनिं सद्यस्समासाद्य काञ्चीं, तच्चरणशरणवरणसमधिगतपञ्चसंस्कार, मीमांसायुगळपरिकलनविमलमना, रामानुजमुनिचरणसपर्यापर्याप्त, छायेव तमनुवर्तमान, तत्रैवावातिष्ठत कञ्चित्कालम् । एतेन चास्य सत्सहवासवाञ्छा सदाचार्यपरिचर्याचिन्ता तत्त्वबुभुत्सा इत्येवमादयो गुणा गृह्यन्ते ।

अथ च रामानुजाचार्ये नित्यवासाय श्रीरङ्गक्षेत्रमुपगनवति स्वयमपि तत्र जिगमिषु स्वभवनकवाटमुद्घाट्य रथ्याचारिण सर्वान् सर्वस्वं ग्राहयित्वा तद्दिष्ट, प्रस्थाय सह सहधर्मिण्या, कुत्रचित्काननभुवि 'किमस्मिन् मार्गे भयमस्ति' इति तया पृष्ट 'यदि नीव्या किञ्चिदस्ति, तर्हि वर्त्मनि भयमस्ति' इति दत्तोत्तर सशोध्य तन्नीवीं तत्र निगूहितं किञ्चन कनकभाजनं बलादादाय प्रक्षिप्य वनभुवि 'नेत परमस्ति तव भयमस्मिन् पथि' इत्युक्त्वा निश्चिन्तो जगाम तादृश्यैव धर्मपत्न्या साकं श्रीरङ्गम् । एतेनास्य परं वैराग्यमुक्तं भवति । यदुच्यते योगानुशासने — 'दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्' इति ।

यदा तु भगवान् रामानुजाचार्योऽष्टादशकृत्व रहस्यमन्त्रार्थग्रहणाय गोष्ठीपूर्णमुपसद्य सम्यक्परीक्षित 'दण्डपवित्रमात्रसहायेनात्रागन्तव्यं भवता' इति सन्दिश्य तत्प्रेषितेन केनचित् श्रीवैष्णवेन बोधित दाशरथिकूरनाथाभ्यां साकमागत्य 'एकेनैवागन्तव्यं भवतेति मयोक्ते त्रिमिस्त्वेनाभ्यां सहागम''

इति गोष्ठीपूर्णार्यैः पृष्टः 'दण्डपवित्रमात्रसहायेनागन्तव्यम् इति किलाचार्याणाम् आज्ञा। एतौ हि मदीये दण्डपवित्रे' इत्यब्रवीत्। कः पुनर्दण्डः? कः पवित्रम्? इति पुनराचार्यैः पृष्टो रामानुजाचार्य आह — 'दाशरथिर्दण्डः, कूरेशः पवित्रम्' इति। एतेन कूरेशस्य तथाविधाचार्याभिमानभाजनत्वं ज्ञायते।

*अन्यदा च गोष्ठीपूर्णार्याः रामानुजाचार्याय चरमश्लोकार्थं परमरहस्यं* रहस्यमुपदिश्य 'न कस्मैचिदप्युपदेष्टव्योऽयं भवता' इत्यब्रुवन्। श्रीवत्सचिह्न-मिश्रेभ्योऽप्यनुपदेष्टव्यः को वार्थः?' इति रामानुजाचार्यैरुक्ते 'तर्हि हायनमेकं शुश्रूषया विना न ब्रूयाः' इति प्रोचुः। ततश्चागत्य श्रीरङ्गं कूरनाथमुवाच रामानुजार्यस्तद्वृत्तम्। कूरेशस्तु व्यजिज्ञपदेवं 'संवत्सरपर्यन्तं जीवामीत्यत्र कः प्रतिभूः? आचार्यसन्निधौ मासोपवासं संवत्सरशुश्रूषासमानमामनन्ति महान्तः। ततो भवत्सन्निधौ मासोपवासिने मह्यं तमर्थमुपदिशन्तु भवन्तः' इति। तदनु मासोपवासिने तस्मै चरमश्लोकार्थमुपादिक्षत् रामानुजाचार्यः। अनेनास्य शरीरनश्वरतायां दृढाध्यवसायः, अनादरो देहे, अभिनिवेशश्चार्थ-विशेषग्रहणे त्वरा चेति गुणा गृह्यन्ते।

यदा तु भगवान् रामानुजाचार्यो ब्रह्मसूत्राणां विशिष्टाद्वैतपरं श्रीभाष्यं *व्यरचयत्, तदा व्यास इव विनायकं भारते, न्ययुङ्क्त कूरनाथं श्रीभाष्यं* लिखितुं। मा लिखाविदितार्थं किमपि वाक्यं इति च। एवं स्थिते कुत्रचित् 'शेषत्वाविशेषितं ज्ञातृत्वमात्रं जीवात्मनस्स्वरूपम्' इति भाषितवति भगवति भाष्यकारे जोषमेवासीदेषः। यदा पुनः पुनः प्रेर्यमाणोऽपि न लिलेख, तदा कुपितेनाचार्यवर्येण झपदि निरकास्यत च बहिः। सतीर्थ्याः पुनरेनम् ऊचुः—'एवमवमानिता भवन्तः किमिदानीं भावयन्ति' इति। कूरेशस्तूवाच — 'स्वस्य स्वामी प्रभवतीत्यत्र किं भावनीयमस्ति?' इति। भगवान्

भाष्यकारस्तु शिष्यस्य शान्ति, शेषत्वरहितज्ञातृत्वस्य देहात्माभिमानस्य चाविशेषञ्च भावयित्वा पुनराहूयैनमभाषिष्ट शेषत्वसहितं ज्ञातृत्वमेव जीवात्मनः स्वरूपमिति । ततश्चालिखदेषः । अनेन चास्याखिलिनं 'तत्त्वज्ञानं, लोकातिशायिनी शान्तिः, आचार्यविषये अचिन्तुल्यं पारतन्त्र्यञ्चेत्येतेऽवगम्यन्ते गुणाः ।

किञ्चायं प्रातस्सङ्गवमध्याह्नापराह्णसायाह्नाभिधेषु कालेषु पञ्चसु प्रत्यहमभिगमनोपादानेज्यास्वाध्याययोगनिरतः, कदाचिद्वर्षासु कस्मिंश्चिद्दुर्दिने, वर्षति चामध्याह्नमविरतधारासारैर्वासवे, स्वगृहादुपादानाय बहिर्निर्गमनायावकाशमलभमानः कालातिपातभिया भगवन्तमिज्यया राध्य मध्याह्ने निवेद्य च यत्किञ्चित् फलादिकं तथैव स्वाध्यायादिना चावशिष्टं कालं नीत्वा रात्रावुपवसन्नेव सहधर्मिण्या सह शिश्ये ।

तावदेव भगवतः श्रीरङ्गनाथस्य शयनासनसमयसमुचितगुडोदननिवेदननिवेदको घण्टाकाहलादिकोलाहलोऽश्रूयत । तदास्य धर्मपत्नी गोदा मनसैवमाह रङ्गभर्तारं—'भो ! भगवन् ! कोऽयमाडम्बरो गुडान्नभोजने भवतः ? भवद्भक्ते मद्भर्तरि अनशनेन क्लिश्यमाने शयाने' इति । सपदि विदिततदाशयो रङ्गेशः स्वगेहापवरकवितर्दिकाशयमुत्तमनम्बिनामानं स्वकिङ्करं न्ययुङ्क्त स्वप्ने— त्वरितम् उत्तिष्ठ; मदुपभुक्तमेतत् गुडान्नं छत्रचामरवाद्यघोषादिभिर्नीत्वा कूरेशायोपवसते समर्पय झडिति' इति । स चोत्थाय विस्मितः तत्क्षणं यथादिष्टमन्वतिष्ठत् । निद्राणस्तु कूरनाथः स्वभवननिकटे एव श्रुत्वा वाद्यघोषं भगवतो वीथीयात्राशङ्की त्वरितमुत्थाय स्वनिकेतनकवाटमुद्घाट्य उत्तमनम्बिना समुपहृतं, यथावृत्तं निवेद्य समर्पितं गुडान्नं कवलद्वयमात्रं प्रसादतया स्वीकृत्य 'एतन्मूल्यं भगवत एव कोशागारं गन्तुमर्हति । तन्नाहमुत्सहे सर्वं स्वीकर्तुम्' इत्युक्त्वा प्राहिणोत् । ततश्चाचिन्तयत् —' किं नाम कारणं गुडान्नप्रेषणे भगवतः ! नहि सर्वज्ञः

सर्वशक्तः परमकारुणिकोऽपि भगवान् समीहितमप्रार्थितस्संविधत्ते समाश्रितानाम् । न मयैतन्मनसापि चिन्तितम् । किन्तु अनया किमपि चिन्तितं भवेत् । तदेनां पृच्छामि ' इति । अपृच्छच्च ।

*सा तु निवेदयामास यथावस्थितं स्वचिन्तितम् ।* स तामुवाच—' नेदमुचितं, यद्भुञ्जानस्य गुडान्नकबलं भगवतो गलग्राहिण्यभूः ' इति । ग्रासद्वयञ्चोभावुपयुज्य शिश्याते । तद्ग्रासद्वयमेव व्यासपराशरभट्टारकौ पर्यणमत भगवतः सङ्कल्पात् । एतेन चास्य प्राणात्ययेऽप्यनतिक्रमणीयपञ्चकालपरायणता 'हस्तादानो मुखादानः' इतिवदश्वस्तनिकवृत्तित्वं, तन्निदानभूतं भगवति रक्षकत्व-नैर्भर्यं, स्वाधीनरङ्गेश्वरत्वम् , इत्यादयो गुणाः प्रतीयन्ते ।

यदा तु तत्कुमारौ विवाहोचितवयसौ संवृत्तौ, तदा गोदादेवी पतिमभाषत —' कुमारौ तरुणौ संपन्नौ । कन्ये के चन कुत्राप्यन्वेषणीये ननु ' इति । कूरेशस्तु धर्मपत्नीमाह— ' के वयं भगवत्कुटुम्बस्य योगक्षेमचिन्तायै ' इति । पुनरन्यस्मिन्दिने ' उपेक्षितलोकतन्त्राणां किं नाम गार्हस्थ्यम् ! ' इति गोदया उक्तः खिन्नमनसि यथापुरं दर्शनाय रङ्गनेतुर्जगाम मन्दिरम् । दर्शनसमये 'किमपि वक्तुकामोऽसीव' इति भगवता पृष्टोऽयं निवेदयामास जायागोदा-बाधाम् । भगवानुवाच—'किन्तेऽनया चिन्तया ? मत्कुटुम्बे कोवा ते भरः ?' इति । ततश्चित्रीयमाणचित्तो यथापूर्वं मङ्गलमाशास्य जगाम गृहम् । अन्येद्युः एव तत्पुत्राय श्रीपराशरभट्टार्याय स्वयं कन्यामानीय ददतुः कन्यापितरौ । विवाहोत्सवश्च यथाविभवं ववृधे । अनेन चास्यास्मयालामिव देहयात्रामपि भगवानेव बभारेति स्फुटमवगम्यते । येषामिदानीन्तनानामपि तादृशं तात्त्विकं भगवति नैर्भर्यं तेषामपि सर्वं भारं बिभर्ति भगवानिति च ।

अन्यच्च, कदाचित्कुत्रचित् केनचित् सर्पेणार्धग्रस्तं आरटन्तं कञ्चित् मण्डूकं दृष्ट्वाऽयं कूरेशः अचिन्तयदेवं — 'कमिदानीमयमाक्रन्दति सर्वलोक-

शरण्यं नारायणमृते ग्राहग्रस्तो गजेन्द्र इव ' इति । मुमोह च । अनेन 'महत्यापदि संप्राप्ते स्मर्तव्यो भगवान् हरिः ' इति महामुनिवचनमनुतिष्ठन्तम् आत्मानमिव तमप्यमनुतेति । तेन च ' आत्मवत्सर्वभूतानि ' इतिवचादास्य-भावनं चास्य सर्वभूतेषु ज्ञायते ।

अन्यदा श्रीरामानुजार्याणां मठे मध्याह्नसमये समुपस्थितायां च भोजनवेलायां कदलीदलानयनाय केनचित्प्रेषितोऽयं कूरेशः गत्वा कञ्चनारामं दलमेकं कदल्याः छित्वा लवित्रेण तत्र स्रवन्तीमवलोक्य जलधारां स्वयमपि विमुञ्चन्नश्रुधारां करयुगलगलितकदलीदललवित्रः तत्रैव निषण्णो विषण्णोऽभूत् सुचिरम् । तावन्मठे कदलीदलं कूरनाथं भोजनमप्यलभमानाश्चुक्रुशुः सर्वे । रामानुजाचार्यास्तु तदा विचार्य तत्प्रेषितारं बोधयामासुः — ' नियोजकेन पुंसा नियोज्यस्वभावाभिज्ञेन भाव्यं तत्तत्कार्येषु । को वा नियोजयेदेनमेतादृशे कार्ये' इति । एतेनास्य स्थावरेष्वप्यतिमानुषमानृशंस्यमवगम्यते ।

किञ्च, यदा चोलभूपः ' शिवात्परतरं नास्ति ' इत्यक्षरपङ्क्तिमारोप्य पत्रिका तत्र सम्मतिसूचकानि हस्ताक्षराणि न्यसितुं प्रमाणैकशरणान् रामानुजा-चार्यान् स्वसभामानेतुं दूतान् प्रेषयामास, तदायमनिवेद्यैवाचार्याय तदीयं काषायं दण्डं चादाय प्राचार्येण पराङ्कुशदासेन सममभिगम्य चोलसभां तत्र श्रुतिस्मृतीतिहासपुराणमीमांसापुरस्सरैः प्रमाणैः तदनुसारिणीभिश्च युक्तिभिः निरणैषीत् स्वरूपरूपगुणोभयविभूतिभिः जगदुदयविभवविलयान्तःप्रवेश-नियमनभवबन्धनविमोचनादिभिश्च शिवादपि परात्परं श्रियःपतिं नारायणमेव । स तु चोलभूपः ' भवन्तस्तु प्रभवन्ति कर्तुमकर्तुमन्यथाकर्तुं च वस्तु स्वाधीन-निखिलप्रमाणयुक्तयः । अलमनेन शुष्कोपन्यासमोदनेन । न्यस्यन्तां हस्ताक्षराणि अस्यां पत्रिकायाम्' इति नितरां निर्बबन्ध । कूरेशस्तु पत्रिकामादाय ' शिवात्

परतरं नास्ति' इति पङ्क्तेरनन्तरं 'द्रोणमस्ति ततः परम्' इत्यर्थान्तरपरमति-विडम्बनकरं विलिख्य वाक्यं विन्यस्य हस्ताक्षराणि प्रायच्छत् ।

राजा तु तदनुवाच्यातिलघिमकरं स्वस्य स्वदैवतस्यापि अनिवारणीयेन क्रोधाग्निना दन्दह्यमानः नेत्रोत्पाटनमादिदेश कूरेशस्य । कूरेशस्तु 'युक्तमिदं प्रायश्चित्तं मन्नयनयुगलस्य । यन्महापातकिनस्तव मुखमवालोकत' इत्युक्त्वा स्वनखैः स्वयमेवोत्पाटयामास स्वलोचने । तुतोष च स्वदर्शनस्थापनाय स्वदर्शनपरिहारेणापि । अनेनास्य स्वदेहव्ययेनापि आचार्यदेहरक्षणस्य कर्तव्यत्वं, सत्यपि प्राणव्ययभये स्वसिद्धान्तार्थस्यैव व्यवस्थापनं सभायाम्' इत्यादयो गुणा आवेद्यन्ते ।

अपि च यदा यदुशैलनिवासिना रामानुजाचार्येण प्रेषितः 'मारुति-चिरियाण्डान्' नामकः यदुशैलादागत्य श्रीरङ्गे कूरेशाय व्यजिज्ञपत् — भगवान् रामानुजार्यो भवन्नयनविलोपेन बहु विषीदन् भवदवलोकनाय मां प्राहिणोत्' इति । तदोवाच कूरेशस्तम्—

"का वा हानिर्नयनविगमे कीटकल्पस्य मे स्यात्
मुख्यः प्राणो जगत इति यः ख्यायते सोऽस्मदार्यः ।
चोलापायादपगतभयो यादवाद्रौ विभाती-
त्येतद्वाक्यं श्रवणपुटतः पीयते चेदिदानीम् ॥" इति ।

अनेनास्यागणितस्वनयनापनयनस्य स्वाचार्यदेहधारणश्रवणमात्रेणानितर-साधारणः परमानन्दोऽवगम्यते । तेन चाचार्यविषये अनन्यार्हशेषत्वानन्य-शरणत्वानन्यभोग्यत्वानि सुव्यक्तानि भवन्ति ।

पुनरपि यदा यदुगिरेरागत्य रामानुजाचार्यः श्रीरङ्गे कूरेशभवनञ्च—

दोर्भ्यां निपीड्य सुदृढं सुचिरं स्वशिष्यं
दुःखप्रमोदजनिताश्रुझरीर्विमुञ्चन् ।

स्तम्भं वहन्वचनकाययुगेन पश्चात्
किञ्चिज्जगाद कथमप्यथ कूरनाथम् ॥
" दर्शनं समवानस्मद्दर्शनस्येति विश्रुतः ।
तत्रापि दर्शनं दैवाद्गूनमेनोऽन्यदेव नः ॥ "   इति ।

तदोवाच कूरेशः — 'यस्य कस्यचित् श्रीवैष्णवस्योर्ध्वपुण्ड्रं वक्रमिति वा कदाचिन्न चिन्तितं किं मया ! तत्फलमिदम्' इति । रामानुजाचार्यः प्राह— "असंभावितमेव भवत्येतदपि । किन्तु 'ममैव दुष्कृतं किञ्चिन्महदस्ति न संशयः' इति । अनेन तु यदि यया कया च न विधया किञ्चिद् दुःखमनुभूयते, तत् कृतस्य दुष्कृतस्य परिहारायैव फलमनुभूयते, इति वा, 'मुक्तिमारयन्तिकीं दित्सोः प्रारब्धं मोचयिष्यतः । कृपाफलं भगवतः' इति वा, दुःखेषु भोग्यतानुसन्धानरूपं प्रपन्नलक्षणमस्योक्तं भवति । तथा सर्वविदो रामानुजाचार्यस्य मनसोऽप्यगोचरत्वादस्य दुष्कृतलेशस्यापि परिशुद्धात्मत्वमवगम्यते मुक्तस्येवात्रैव ।

अन्येद्युरेवाहूय कूरनाथं रामानुजाचार्यः प्रोवाच — 'करिगिरिनायकः किलार्थितार्थपरिदानदीक्षितः, इति प्रत्यक्षमेवैतत् । ततस्त्वं स्तुहि देवराजं केनचित् स्तोत्रेण स्वनिर्मितेन । याचस्व च दृष्टिम्' इति ।

अनिच्छन्नपि दृष्टिं मांसमयीमतिनिर्बद्धः स्वाचार्येण बहुशः, अयमारभ्य वरदराजस्तवं 'स्वस्ति हस्तिगिरिमस्तशेखरः' इत्यादिना,

" नीलमेघनिभमञ्जनपुञ्जश्यामकुन्तलमनन्तशयं त्वाम् ।
अब्जपाणिपदमम्बुजनेत्रं नेत्रसात्कुरु करीश सदा मे ॥ "

इति पद्येन सदादर्शनयोग्यां दिव्यां दृष्टिमेवाभ्यर्थयामास । तथैव निशीथिन्यां करिगिरिनाथः स्वप्ने ददौ तमेव प्रार्थितमर्थम् । स तु प्रहृष्टः प्रातरुत्थाय कृतकर्तव्यः स्तोत्रं समाप्य प्राप्य रामानुजार्यं प्रणम्य पादयोः निवेदयामास

स्तोत्रं यथावृत्तं वृत्तञ्च । रामानुजाचार्यस्तु 'नैवं, नैवम्' इति ब्रुवन् काञ्चीं नीत्वा कूरेशं वरदस्य पुरः स्तोत्रं वाचयामास ।

यदा स्तवः पूर्णः तदा रामानुजार्योऽन्यत्राभूत्कार्यान्तरासक्तः । वरदस्तु सम्पूर्णमाकर्ण्य स्तवं अन्ते सन्तुष्यन् 'किन्ते प्रियमुपहरेयम्?' इत्यपृच्छत् । कूरेशस्तु 'मया लभ्यमानं पुरुषार्थं मन्नेत्रोत्पाटनहेतुभूतो मच्छिष्यो नाल्वानपि लभताम्' इति प्रार्थयामास । भगवति च 'तथा' इत्यभ्युपगतवति सति, सपदि समुपसृत्य रामानुजार्ये वरदं वरप्रतिग्रहीतारं कूरेशञ्च 'किमिदं प्रणतपरतन्त्रस्य तव स्वातन्त्र्यम्? यदुभावपि मन्मनोरथमतिचक्रमाथे' इत्युपालभमाने सति वरदो दर्शयामास स्वात्मानं रामानुजार्यञ्च तस्मै कूरेशाय मांसचक्षुषे गीताचार्य इव पार्थाय दिव्यचक्षुषे । पुनरुपसञ्जहार च तत्प्रार्थितः चक्षुस्तस्य तस्यैव । अनेन तु शरीरेन्द्रियादिषु दृढतरा पारमार्थिकी जिहासा, तन्मूलभूतः एतच्छरीरावसान एव मोक्षनिश्चयः, भगवन्नित्यकिङ्करतैकरसतया तत्प्राप्तित्वरा चेत्येवमादयोऽस्य मनसि सन्ततसन्तन्यमानाः अभूवन्निति अवगम्यते ।

अन्यदा कूरनाथोऽयमकथयित्वैव स्वाचार्याय रङ्गदयितं द्रष्टुं श्रीरङ्गदिव्यभवनमयासीत् । तत्र चैकाग्रेण मनसा स्तब्धेन वपुषा साञ्जलिबन्धं सेवमाने कूरनाथे रङ्गनाथं, प्रपच्छ भगवान् 'किं वक्तुकामोऽसि?' इति । ततश्चास्मिन् कस्य चन पद्यस्यार्थं सविस्तरमुपन्यस्यति सति, भगवति च अतिप्रीयमाणे 'वरं वृणीष्व' इत्यतिनिर्बध्नति सति, अयमयाचिष्ट — 'भवदनुभवविरोधिनमेनं देहबन्धं विमोच्य देशविशेषे विभाव्यं स्वाभाविकं भवन्निरन्तरानुभवजनितप्रीतिकारितकैङ्कर्यं मे देहि' इति । 'एनमपहायान्यं वरं वरय' इत्यसकृदतिनिर्बध्यमानोऽपि भगवतायमाह—"यदपेक्ष्यमपेक्षितुरस्य हि तत्परिपूरणमीशितुरीश्वरता । अन्यथा का वा तवेश्वरता? 'रामो द्विर्नाभिभाषते' इत्यादिस्सलिललिखिता लिपिर्वा?" इत्यादि ।

भगवानुवाच—'एवं तर्हि भवते भवदीयेभ्योऽपि मया दत्तं परमपदम्' इति। अलमकरोच्च तं ब्रह्मालङ्कारेणेव स्वशेषवस्त्रमालातीर्थप्रसादस्वपादुकाविन्यासाद्यलङ्कारेण। तद्यालङ्कारमर्चिरादिसरणौ प्रथमालङ्कारमिव लब्ध्वायमप्रविश्यैव स्वभवनं स्वपितृभवन एवोपविवेश।

रामानुजार्यः पुनरेनं वृत्तान्तमुपश्रुत्य तृप्तचित्तः स्वकाषायमुपर्युपरि प्रक्षिपन्ननर्त। 'किमेतत्?' इति तत्रत्यैः पृष्टः प्राह—'कूरेशाय तत्सम्बन्धिभ्यश्च भगवता मोक्षो दत्तः' इति श्रुतम्। तस्मात्कूरेशसम्बन्धादस्माभिः अप्यनायासेनानिच्छद्भिरपि मोक्षो लप्स्यते इति महान्प्रमोदः" इति। अनेनास्य यथा मनीषितं निरवर्तयद्भगवानिति, कूरेशस्येव दृढाध्यवसायवतो यस्य कस्यापि मनीषितमेवमेव सम्पादयति भगवानिति चावगम्यते। किञ्च सदाचार्यसंबन्धस्येव सच्छिष्यसम्बन्धस्याप्युत्तारकत्वं श्रीभाष्यकाराभिमतमिति च।

ततश्च भगवान् भाष्यकारः प्राप्य कूरनाथं पप्रच्छ—"कीदृशीयं त्वरा? यन्मामपि पृष्ठतः कृत्वा परमपदनाथं परवासुदेवं सेवितुं सन्नद्धोऽसि?' इति। कूरेशस्तूवाच—'भगवन्! नित्यविभूतौ कश्चनाक्रमो वर्तते। ततः इयं त्वरा' इति। 'तत्राप्यक्रमः को वा?' इति पृष्टः पुनराह—'यत् तत्रत्याः इतो गच्छन्तं प्रत्युद्गच्छन्ति' इति। 'कथमत्राक्रमः?' इति पृष्टः पुनराह—'यदि पुनः प्रथमं भवन्तो गच्छेयुः, तदा पश्चादागमिष्यन्तं मां प्रत्युद्गच्छेयुः। तच्चावयोः शेषशेषिभावस्य विरुद्धमित्ययमक्रमः' इति। आचार्यस्त्वाह—"'अत्यन्तभक्तियुक्तानां न शास्त्रं नैव च क्रमः' इति अक्रमायामपि नित्यविभूत्यां क्रमोऽन्विष्यते भवता। अहो! भवतः शेषत्वनिष्ठा" इति। अनेन च 'अत्र परत्र चापि' इति परमाचार्यवचनार्थनिष्ठा प्रतिपाद्यतेऽस्य।

एतन्निर्मितेषु पञ्चसु स्तवेषु श्रीवैकुण्ठस्तवः प्रथमः द्व्यधिकशतश्लोकपरिमितः, स्वाचार्यरामानुजार्यप्रपन्नजनकूटस्थश्रीशठकोपमुनिप्रणतिपुरस्सरमुपक्रान्तः। अनेन च मन्त्ररत्नविवरणं क्रियते। परवासुदेवो वैकुण्ठनाथ एव मुख्यो विषयः। सकलश्रुतिशिखरगहनाभिधेयनिकरविवरणपराणि सर्वाणि पद्यान्यत्र।

द्वितीयोऽतिमानुषस्तवः एकषष्टिपद्यपरिमितः अत्र व्यूहावताराः विभवावताराश्च वर्णिताः। तत्रापि रामकृष्णावतारौ सविस्तरं बहुभिः पद्यैः वर्णितौ। वटदलशयन-निखिलभुवनपरिमाण-हिरण्यकशिपुनखविदारण-त्रिपुरदहन-पाकशासनानुजत्वादयश्चैकैकशः संग्रहेण कथिताः।

तृतीयः सुन्दरबाहुस्तवः द्वात्रिंशदधिकशतपद्यपरिमितः। यदा रामानुजार्यो यादवगिरिमलञ्चकार, तदा पुनः स्वाचार्यसंश्लेषोद्देशेनैवायं स्तवः प्रवृत्ते। तदेतदस्योपक्रमोपसंहाराभ्यामेव गम्यते। तथा हि। उपक्रमे —

'श्रीमन्तौ हरिचरणौ समाश्रितोऽहं श्रीरामावरजमुनीन्द्रलब्धबोधः।
निर्भीकस्तत इह सुन्दरोरुबाहुं स्तोष्ये तच्चरणविलोकनाभिलाषी॥' इति।

उपसंहारे च—

' विज्ञापनां वनगिरीश्वर! सत्यरूपाम्
अङ्गीकुरुष्व करुणार्णव! मामकीनाम्।
श्रीरङ्गधामनि यथापुरमेव सोऽहं
रामानुजार्यवशगः परिवर्तिषीय॥' इति।

*अत्र कानिचित्पद्यानि शठरिपुसूक्तिसमानार्थकानि;* सकलोपनिषत्सारार्थप्रकाशकानि; आचूडपादं सुन्दरबाहोः दिव्यमङ्गलविग्रहवर्णनपराणि; दिव्यमहिषीपरिजनपरिच्छदवर्णनपराणि; दशावतारादिवर्णनपराणि; स्वनैच्यानुसन्धानपराणि च।

तुरीयः पुनः वरदराजस्तवः। यः किल पुनर्नेत्रप्राप्तये रामानुजार्यैः एव प्रेरितैरेभिः कृत इति पूर्वोपदानैरेव स्फुटीकृतम्। अत्र व्यधिकं पद्यानां शतम्। आमौलिपादं वरदराजदिव्यमङ्गलविग्रहवर्णनं, विशेषतः स्वनैच्यानुसन्धानं, देशविशेषे नित्यकैङ्कर्यप्रार्थनञ्चात्र कृतम्।

उपक्रमोपसंहाराभ्यां स्तवचतुष्टयस्यैकप्रबन्धत्वमवगम्यते। उपक्रमे—

'यो नित्यमच्युतपदाम्बुजयुग्मरुक्म-
व्यामोहतस्तदितराणि तृणाय मेने।
अस्मद्गुरोर्भगवतोऽस्य दयैकसिन्धोः
रामानुजस्य चरणौ शरणं प्रपद्ये॥' इति।

उपसंहारे—

'रामानुजाङ्घ्रिशरणोऽस्मि कुलप्रदीप-
स्त्वासीत्स यामुनमुनेस्स च नाथवंश्यः।
वंश्यः पराङ्कुशमुनेस्स च सोऽपि देव्याः
दासस्तवेति वरदास्मि तवेक्षणीयः॥'

इति च स्वाचार्यरामानुजाचार्यनामनिबन्धनात्; प्रतिपाद्यार्थैक्याच्च। स चार्थः परव्यूहविभवान्तर्याम्यर्चारूपेण पञ्चप्रकारो भगवान्नारायण एवेति।

अनन्तरस्तु श्रीस्तवः। प्राप्यभूतस्य नारायणस्यापि परमभोग्यतया परमप्राप्यत्वाल्लक्ष्म्याः, तस्याः स्तवस्यापि आनन्तर्यं युज्यते। सूच्यते चैतत् श्रीपराशरभट्टार्यैः श्रीगुणरत्नकोशे 'श्रियः श्रीः श्रीरङ्गेशय तव च हृद्यां भगवतीं, श्रियं त्वत्तोऽप्युच्चैर्वयमिह फणामः शृणुतराम्' इत्यनेन श्रीरङ्गराजस्तवानन्तर्यं श्रीगुणरत्नकोशस्य कथयद्भिः। मनोजवसाः खलु भट्टार्याः।

षष्ठस्तु यमकरत्नाकराख्यः सव्याख्यः। अत्र च काव्ये प्रत्यक्षरश्लेषमयनानाविधयमक-एकाक्षर-द्व्यक्षरश्लोकपद्माद्याकृतिबन्धादि-शब्दालङ्कारभरितैः पद्यैः परिपूर्णे षोडशसर्गात्मके कंसवधान्ता श्रीकृष्णकथा निबद्धा।

एवमग्रे कूरेशो निखिलसद्गुणगणभरितः, ज्ञानानुष्ठानोपदेशप्रबन्धादिभिः जगदिदमुज्जीवयन्नष्टोत्तरशतं वत्सरानलञ्चकारेमां विभूतिम्। अयन्तु रामानुजाचार्यापेक्षयाष्टभिर्वत्सरैः ज्यायानिति ज्ञायते। यतो रामानुजार्यावतारवत्सरात् पिङ्गलाख्यात्प्राचीनोऽष्टभिस्संख्याभिरस्यावतारवत्सरस्सौम्याख्यः। इति शम्।

श्रीवत्सचिह्नचरितं परमं पवित्रं
ज्ञानं विरक्तिमपि शान्तिमिहैव दद्यात्।
श्रोतुः प्रवक्तुरथ तत्परमं पदं यत्
दृश्यं सदा भगवतः किल सूरिसङ्घैः॥

इति श्रीवत्सचिह्नमिश्रचरितम्

# अथ दिव्यप्रबन्धप्रामाण्यम्

'एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नेमे द्यावापृथिवी' इति महोपनिषदि नारायणाख्यदेवताविशेषस्यैव जगत्कारणत्वं द्यावापृथिव्याद्यचेतनवच्चेतनयोश्चतुर्मुखशिवयोरपि तत्कार्यतया सृज्यत्वञ्च प्रत्यपादि ।

श्वेताश्वतरोपनिषदि 'यो ब्रह्माणं विदधाति पूर्वम्' इति नारायणाच्चतुर्मुखोत्पत्तिरभिहिता ।

शतपथब्राह्मणे "संवत्सरे कुमारोऽजायत सोऽरोदीत्तं प्रजापतिरब्रवीत् कुमार किं रोदिषि यच्छ्रमात्तपसोऽधिजातोऽसीति । सोऽब्रवीदनपहतपाप्मा वा अहमनाहितनामा नाम मे धेहि पाप्मनोऽपहत्या इति । तं प्रजापतिरब्रवीत् रुद्रोऽसीति । तद्यस्य तन्नामाकरोदग्निस्तद्रूपमभवदग्निर्वै रुद्रो यदरोदीत्तस्माद्रुद्रः सोऽब्रवीत् ज्यायान्वा अहमस्मि धेह्येव मे नामेति । तं प्रजापतिरब्रवीत् — भवोऽसीति शर्वोऽसीति ईशानोऽसीति पशुपतिरसीति उग्रोऽसीति भीमोऽसीति महादेवोऽसीति" इति रुद्रस्य संवत्सरशब्दवाच्यचतुर्मुखपुत्रत्वं पापसम्बन्धः नामकरणेन तन्निवृत्तिश्च न्यरूपि ।

साम्नि च 'विरूपाक्षाय दन्ताञ्जलये ब्रह्मणः पुत्राय ज्येष्ठाय श्रेष्ठाय अमोघाय कर्माधिपतये' इति रुद्रस्य चतुर्मुखज्येष्ठपुत्रत्वं स्पष्टमभाणि ।

मोक्षधर्मे— 'पश्यैकादश मे रुद्रान्दक्षिणं पार्श्वमाश्रितान् । द्वादशैव तथादित्यान्वामपार्श्वं समाश्रितान् ॥' इति ।

गीतायां—'पश्यामि देवांस्तव देव देहे सर्वांस्तथा भूतविशेषसङ्घान् । ब्रह्माणमीश कमलासनस्थमृषींश्च सर्वानुरगांश्च दिव्यान् ॥' इति ।

विष्णुपुराणे — '..., विष्णुवक्षस्स्थलस्थिताम् । कात्वन्या त्वामृते देवि सर्वयज्ञमयं वपुः । अध्यास्ते देवदेवस्य योगिचिन्त्यं गदाभृतः ।' इति

च ब्रह्मरुद्रादिसर्वदेवानां स्वरूपस्थितिप्रवृत्तीनां नारायणाधीनत्वं, नित्यानपायिन्याः स्वस्यापि भोग्यभूतायाः श्रिय इव कीटप्रायाणां सर्वदेवानामप्याश्रयतया स्वदेहप्रदानादनितरसाधारणं सौशील्यञ्च प्रावोचि ।

हरिवंशे —' क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम् ।
आवां तवाङ्गे सम्भूतौ तस्मात्केशवनामवान् ॥ ' इति ।

विष्णुपुराणे — शङ्कर उवाच —
" कृष्ण कृष्ण जगन्नाथ ! जाने त्वां पुरुषोत्तमम् ।
परेशं परमात्मानमनादिनिधनं हरिम् ॥ ........
अस्मत्संश्रयदृप्तोऽयं नापराधी तवाव्यय ।
मया दत्तवरो दैत्यस्ततस्त्वां क्षामयाम्यहम् ॥
एष ब्रह्मा सहास्माभिः सहरुद्रैस्त्रिलोचनः । ........
प्रणाम-प्रवणा नाथ दैत्यसैन्यपराजिताः ।
शरणं त्वामनुप्राप्तास्समस्ता देवतागणाः ॥ "

इति च देवानां तत्तदापत्सु पयःपयोधिगमनं, भगवतः स्तुतिकरणं, तच्छरण-वरणं, तेन रक्षणम्, इत्यादि श्रीरामायण-महाभारत-विष्णुपुराण-श्रीभागवतादि सर्वेतिहासपुराणेषु स्फुटं निरणायि ।

एतेन नारायणस्यैव परतमत्वे ब्रह्मरुद्रादीनामवरत्वे च ब्रह्मरुद्रादय एव साक्षिण इति स्फुटम् ।

एतादृशब्रह्मरुद्रादिनियमनं नारायणस्य किं राजभृत्यन्यायेनाज्ञा-मात्रादिति शङ्कायामन्तःप्रविश्यात्मतया स्थित्वा नियन्तृत्वेनेति ' अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा ' इति तैत्तिरीयश्रुतिर्वक्ति ।

अत एवास्य सर्वात्मतया सर्वस्य सूक्ष्मस्य स्थूलस्य च चेतनस्य अचेतनस्य च तच्छरीरत्वं प्रतिपादयत्यन्तर्यामिब्राह्मणं, 'यस्य पृथिवी शरीरं, यस्यात्मा शरीरं, यस्याक्षरं शरीरं, यस्य तमश्शरीरं' इत्यादिना ।

शरीरवाचकशब्देनैव शरीरिणोऽपि निर्देशः 'स्थूलोऽहं कृशोऽहं देवोऽहं मनुष्योऽहम्' इत्यादिलोकानुभवादेव सिद्धः । 'य एव लौकिकास्त एव वैदिकाः' इति न्यायेन श्रुतिरपि 'सर्वं खल्विदं ब्रह्म' 'तत्त्वमसि' 'अयमात्मा ब्रह्म' इति चेतनाचेतनात्मकं जगद्ब्रह्मणा सह सामानाधिकरण्येन व्यपदिशति; न तु तेषामैक्यात्; ब्रह्मव्यतिरिक्तस्य मिथ्यात्वाद्वा ।

किं बहुना — वृत्तिकारबोधायनादयोऽपि ब्रह्मसूत्रं शारीरकशब्देन व्यपदिशन्ति; 'सहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेन' इत्यादौ । निरुपाधिकशरीरप्रतिसम्बन्धी शारीरः । चेतनानां शरीरप्रतिसम्बन्धित्वं तत्तत्कर्मोपाधिकम् । भगवतस्तु निरुपाधिकं (स्वाभाविकम्) शरीरसम्बन्धित्वं 'तस्यैष एव शारीर आत्मा, यः पूर्वस्य,' इत्यादिश्रुतिसिद्धम् । तादृशं शारीरं कायतीति शारीरकं शास्त्रम् । 'कै गै शब्दे' इति हि धातुतदर्थौ । स्वभावतः सर्वशरीरकं परमात्मानं स्वरूपरूपगुणविभूत्यादिभिस्सह प्रतिपादयतीति शारीरकं शास्त्रमित्युच्यते इति तदर्थः ।

एवमितिहासपुराणाद्युपबृंहितभागद्वयात्मकश्रुतिप्रतिपादिता एवार्थाः पराङ्कुशादिदिव्यसूरिभिः स्वप्रबन्धेषु इतोऽपि विशदतरं प्रतिपादिता इति 'अर्थैकत्वादेकं वाक्यम्' इति न्यायेन सपरिकरभगवत्प्रतिपादकत्वात् द्राविडप्रबन्धा अपि वेदत्वान्नापयान्तीति सिद्धम् ।

ननु — सततमेकानुपूर्वीविशिष्टसंस्कृतशब्दराशिरूपवेदसमानप्रामाण्यं कथं भाषारूपदिव्यप्रबन्धानामिति चेन्न । संस्कृतवेदापेक्षयातिशयितत्वाद्दिव्यप्रबन्धानाम् । तथाहि—वेदयतीति वेद इति व्युत्पत्त्या सर्वेभ्योऽपि तत्त्वहित-

पुरुषार्थान् वेदयितुमेव प्रवृत्तः संस्कृतवेदः त्रैवर्णिकमात्राधिकृतत्वात्कथं सर्व-चेतनानुज्जीवयेत्? द्राविडवेदस्तु भाषारूपत्वेन सर्वाधिकारत्वात् स्त्रीशूद्रादीनपि उज्जीवयति इति।

ननु चतुर्थादिवर्णजातैः प्रणीतानां प्रबन्धानां कथं प्रामाण्यमिति चेन्न। संस्कृतवेदो मुमुक्षूणां भक्तिप्रपत्त्याद्युपायमिव कामनावतामल्पास्थिरदुःखमिश्र-फलरूपस्वर्गादिपुरुषार्थं तत्साधनं ज्योतिष्टोमादिकं च विदधाति। तद्वदेव प्रत्यवायजनकशत्रुमारणरूपं फलं तत्साधनतया श्येनयागञ्च विदधाति। उत्तमाधिकारिणां तु सर्वं नोपादेयम्। तदुक्तं गीताचार्येण—

'त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन।
यावानर्थ उदपाने सर्वतस्संप्लुतोदके।
तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः॥' इति।

दिव्यसूरयस्तु भगवन्निर्हेतुकविषयीकारलब्धरजस्तमोरहितशुद्धसत्त्व-गुणतया नित्यभगवदनुभवकैङ्कर्यैकपुरुषार्थतया तदतिरिक्तं चतुर्मुखैश्वर्यमन्ततः कैवल्यमपि नित्यं तिरस्कुर्वन्ति अल्पत्वास्थिरत्वादिदोषदर्शनेन। किं पुनस्ततः अवरं स्वर्गादिकं प्रत्यवायावहं श्येनादिकञ्च। तथैवोपदिशन्ति चान्येभ्यः। नैतादृशी परोज्जिजीवयिषा वेदपुरुषस्य। न ह्येतादृशज्ञानवन्तस्सूरयो जन्मान्तर-स्वकर्मसमार्जितज्ञानेभ्यो विदुरधर्मव्याधादिभ्यः परधर्मोपदेशनिरतेभ्यो हीयन्ते।

ननु—'ब्राह्मणेन संस्कृतव्यतिरिक्तभाषागानं न कर्तव्यम्' इति भाषा-गानस्य निषिद्धत्वादेते प्रबन्धा न प्रमाणपदवीमारोढुमर्हन्तीति चेन्न।

'हरिकीर्तिं विनैवान्यद्ब्राह्मणेन नरोत्तम।
भाषागानं न गातव्यं तस्मात्पापं त्वया कृतम्॥'

इति मात्स्यपुराणोक्तयमवचनानुसारेण भाषया हरिगुणचेष्टितादिव्यतिरिक्त-विषयकं गानं न गातव्यमित्येव निर्णीतत्वाददोषात्।

किं बहुना — द्राविडभाषाया अगस्त्यमहर्षिकृतव्याकरणोदाहरणभूतत्वेनार्षत्वादुपादेयत्वं शंभुरहस्याख्ये ग्रन्थे स्पष्टं प्रतिपाद्यते ।

'अवश्यं प्राकृतं ग्राह्यं यथैव किल संस्कृतम् ।
एवमेव विजानीहि द्रामिडश्चापि भाषितम् ॥
व्याकर्ता स हि सर्वज्ञो यस्यागस्त्यो महामुनिः ।
... .... ... .... .... .... .... ....
यथैव संस्कृती भाषा प्रयुक्ता स्वर्गदायिनी ।
प्राकृती द्रामिडी चापि तथैव स्वर्गदायिके ॥
अतोन्याः खलु या भाषा आन्ध्रकर्णाटदेशजाः ।
अनार्षत्वादपभ्रंशा इति शास्त्रविदां मतम् ॥' इति ।

तस्मादार्षभाषया द्रामिड्या हरिकीर्तनमत्यन्तश्लाघ्यमेव । अतिकमनीयञ्च ।

ननु — पौरुषेयाणां प्रबन्धानां कथमपौरुषेयवेदतुल्यत्वमिति चेन्न । हंसरूपमुपादाय ब्रह्मणे, मत्स्यरूपमुपादाय मनवे च वेदोपदेशवद्धर्मोपदेशवत्, व्यासमाविश्य वेदविभागमहाभारतब्रह्मसूत्रादिरचनावच्च, दिव्यसूरिषु स्वयमेव सन्निधायोक्तत्वात् प्रबन्धानाम् ।

कथमनित्यानां प्रबन्धानां नित्यवेदतुल्यत्वमिति मा वोचः । सुप्तप्रबुद्धाध्यापकन्यायेन, लयसृष्ट्योर्वेदस्येव दिव्यप्रबन्धानामपि नित्यत्वोपपत्तेः । अत एव 'विश्वामित्रस्य सूक्तं भवति' इत्यादौ विश्वामित्रादीनां मन्त्रद्रष्टृत्वेन वेदनित्यत्वस्य यथा न बाधस्तथा पराङ्कुशादेरपि सहस्रशाखोपनिषद्द्रष्टृत्वान्न काचिदप्यनुपपत्तिः । एतदेवानुगृहीतं श्रीपराशरभट्टार्यैः —

'ऋषिं जुषामहे कृष्णतृष्णातत्त्वमिवोदितम् ।
सहस्रशाखां योऽद्राक्षीद्द्रामिडीं ब्रह्मसंहिताम् ॥' इति ।

न चैतेषां प्रादेशिकत्वदोषः । द्राविडभाषाप्रचाररहितदेशजाताः संस्कृतमयशास्त्रनिष्णाताः शिष्टा अपि लोकसारङ्गमुनिप्रभृतयो द्राविडदेशाय भाषायै प्रबन्धेभ्यश्च स्पृहयालवस्तदलाभादनुतप्तचित्ता बभूवुरिति श्रूयत इति-वृत्तम् । ततश्च प्रादेशिकत्वमेषामतिशयायैव । न हि उत्कृष्टं वस्तु सर्वत्र सुलभम् ।

न चैतेषामवैदिकैरप्यादृतत्वं दोषाय । वैदिकाग्रेसरैरप्यादृतानामेषाम् अवैदिकादरकारणन्तु तदनुसन्धानेन स्वेष्टसकलफलावाप्तिसिद्ध्या विश्वासातिशयः एव । स चैतेषां गुणातिशयायैव । न त्ववरतायै ।

न चैतेषु प्रबन्धेषु दूतप्रेषण-विश्लेषव्यसन-प्रणयकोपादिकामुकचरित-कथनकृतहेयताशङ्का कार्या । अत्र प्रतिपाद्यस्य कामस्य भगवद्भक्तिरूपत्वात् भगवद्भक्तेश्च भगवज्ज्ञानदर्शनप्राप्त्युपायत्वेन स्वयं फलत्वेन चोपादेयतमत्वात् ।

किं च — एते भगवद्भक्त्युत्पादकत्वादुत्पन्नाया भक्तेर्वर्धकत्वात्, श्रवणमननादौ सद्य एव निरतिशयरुचिजनकत्वात्, वेदादिप्रमाणविरुद्धार्थस्य कस्यचिदपि क्वचिदप्यप्रतिपादनात्त्वहितपुरुषार्थादिसर्वार्थेष्वपि वेदान्तसारार्थ-विशदीकरणाच्च संस्कृतवेदसमानप्रामाण्याः द्राविडवेदा इत्युच्यन्ते प्रामाणिकैः त्रैविद्यवृद्धैः । इत्येवंविधैः प्रबन्धैर्दिव्यसूरयश्चेतनानिहस्थानुदजीवयन्निति शुभम् ।

## इति दिव्यप्रबन्धप्रामाण्यम्




# अनुबन्धः प्रथमः

## (अ) प्रथमस्तुरित्रयचरिते प्रमाणत्वेनोदाहृतकारिकाविवृतिः

प्राप्यस्य ब्रह्मणो रूपं प्राप्तुश्च प्रत्यगात्मनः।
प्राप्त्युपायं फलं प्राप्तेस्तथा प्राप्तिविरोधि च॥
वदन्ति निखिला वेदास्सेतिहासपुराणकाः।
मुनयश्च महात्मानो वेदवेदार्थवेदिनः॥

प्राप्यस्येत्यादि। (१) प्राप्यस्य = चेतनानां प्राप्यभूतस्य ब्रह्मणः= परस्य ब्रह्मणः परमात्मनः रूपं=स्वरूपं, ज्ञानानन्दस्वरूपत्वं, सर्वव्यापित्वं, सर्वशेषित्वं, सर्वान्तर्यामित्वं, दिव्यमङ्गलविग्रहवत्त्वं, सकलकल्याणगुणाकरत्वं, हेयप्रत्यनीकत्वं, दिव्यमहिषीपरिजनपरिच्छदादिमत्त्वं, दिव्ये परमे पदेऽवस्थितत्वं, सर्वप्राप्यत्वम् इत्यादयो ये गुणाः तैर्विशिष्टस्वरूपं प्राप्यवस्तुनो ब्रह्मणः परस्य स्वरूपम्। (२) प्राप्तुश्च प्रत्यगात्मनः =एतादृशं परं ब्रह्म यः प्राप्नोति तस्य प्राप्तृभूतस्य जीवात्मनस्स्वरूपं, ज्ञानान्दस्वरूपत्वम्, अणुत्वं, भगवच्छेषभूतत्वं, तत्परतन्त्रत्वं, तदेकभोग्यत्वं, गुण(धर्म)भूतेन सर्वव्यापिना ज्ञानेन विशिष्टत्वं, (बद्धदशायां प्रकृतिपारतन्त्र्येण सुखदुःखादिद्वन्द्वानुभूतिमत्त्वं, ज्ञानसङ्कोचविकासवत्त्वम्) अपहतपाप्मत्वादिगुणाष्टकविशिष्टत्वम्, इत्यादयो ये गुणाः तैः विशिष्टस्वरूपं परब्रह्मप्राप्तुर्जीवात्मनः स्वरूपम्। प्रत्यगात्मनः = प्रति अञ्चतीति प्रत्यङ् (प्रत्यक्) प्रत्यक्त्वं च= स्वस्मै स्वयं भासमानत्वम्। अयं च जीवात्मा स्वसाक्षात्कारवेलायां घटादिप्रत्यक्ष इव नान्यां काञ्चिदपि सामग्रीमपेक्षते। अपि तु स्वस्मै स्वयमेव भासते इति भावः। (३) प्राप्त्युपायम्= एतादृशजीवात्मनो भगवत्प्राप्तौ साधनभूतस्य कर्मज्ञानभक्त्यादेरुपायस्य स्वरूपम्। (४) फलं प्राप्तेः = भगवत्प्राप्तेः फलं, प्राप्त्यनन्तरभाविनो देशविशेषावच्छिन्न-

भगवन्नित्यकैङ्कर्यरूपस्य पुरुषार्थस्य स्वरूपम् । (५) **प्राप्तिविरोधि** च=एतादृग-भगवत्प्राप्तेः विरोधिभूतायाः प्रकृतेः स्वरूपं, गुणत्रयात्मिकायाः सुखदुःखादि-द्वन्द्वहेतोः भगवत्प्राप्तिप्रतिबन्धकभूतायाः प्रकृतेः ( अचेतनस्य ) स्वरूपं च । इत्येतदर्थपञ्चकम् । एतदेव निखिला वेदाः वदन्ति । इतिहासपुराणानि चैतदेव वदन्ति । **वेदवेदार्थवेदिनः**='वेदाच्छास्त्रं परं नास्ति' 'वेदैश्च सर्वैरहमेव वेद्यः' इतिरीत्या प्रमाणप्रमेयोभयसाक्षात्कारसुनिर्वृताः । **महात्मानः** = 'स महात्मा सुदुर्लभः' इत्युक्तज्ञानिनामग्रेसराः । **मुनयश्च**=भगवद्गुणविग्रहविभूतीनां मनन-शीलाः मानसानुभवनिष्णाताः पराङ्कुशादयो दिव्यसूरयश्च, एतदेवार्थपञ्चकं प्रवदन्तीत्यर्थः । इतिहासपुराणादिकर्तॄणामपि मुनित्वात् 'सेतिहासपुराणकाः' इत्युक्त्यैव तेषां प्रसक्तेर्गतार्थतया, 'मुनयश्च' इति चशब्देन समुच्चितत्वाच्च एते मुनयः अन्य एव पराङ्कुशादयः। निर्हेतुकभगवत्कटाक्षसाक्षात्कृतपरावरनिखिल-तत्त्वयाथात्म्याः ज्ञानिनामग्रेसराः भगवन्मानसानुभवसुनिर्वृताः इति भावः ।

वेदोक्तमेतमर्थमेवोपबृंहयति पुराणेतिहासादिकम् । तदपि कदाचित् स्वकीयं वेदोपबृंहणरूपं कार्यं न निर्वहति । अत एव पराङ्कुशादीनां दिव्यसूरीणां (आळ्वार्) श्रीसूक्तय एव प्रधानं समीचीनतममुपबृंहणं भवति । जैमिनीये 'इतिहासपुराणादयः स्मृतयः कुत्रचित् वेदविरुद्धमप्यर्थं वदन्ति । अतः वेदविरुद्धार्थप्रतिपादिका स्मृतिः न प्रमाणम्' इति स्मृतिप्रामाण्याधि-करणनिरूपणेनैव स्मृतीनां न समीचीनोपबृंहणरूपत्वमिति सूत्रकृद्भिरेवाङ्गीकृतम् ।

अथवा --- 'मुनयश्च' इति चशब्द एवकारार्थे । मुनय एव वदन्ति इत्यर्थः । पराङ्कुशादीनां श्रीसूक्तय एव प्रधानं प्रमाणम् । वेदाः इतिहास-पुराणानि चैता एवोपबृंहयन्तीत्यर्थः । अयमर्थः धर्मनिर्णेतृमुनिवचनादेव निश्चीयते । यदाह सर्वधर्मसमयज्ञो ह्यापस्तम्बः स्वसूत्रारम्भे — 'धर्मज्ञसमयः प्रमाणं वेदाश्च' इति । धर्मं जानन्तीति धर्मज्ञाः । 'रामो विग्रहवान् धर्मः'

'कृष्णं धर्मं सनातनम्' इत्युक्तसिद्धधर्मभूतं परमात्मानं नारायणं तत्कृपयैव करबदरसदृशं साक्षात्कृतवन्तः इत्यर्थः। तेषां पराङ्कुशादीनां मुनीनां धर्मज्ञानां समय एव प्रमाणम्। 'वेदाश्च' इति चशब्द अन्वाचये। यथा 'भिक्षामट, गाश्चानय' इति, भिक्षाटनस्य प्राधान्यं, गवानयनस्य याद‍ृच्छिकत्वं च प्रतीयते। एवं तदनुसारिणो वेदाश्च प्रमाणमिति तदर्थात्।

## (आ) साम्यषट्कसत्तया (पृ. २४) इत्यस्य विवरणम्

प्रकृतिसम्बन्धरहितस्य अत एव परिशुद्धस्य जीवात्मनः, भगवतः प्रधानदिव्यमहिष्याः श्रियश्च साम्यं वर्तते। कथम्! अनन्यार्हशेषत्वम्, अनन्यशरणत्वम्, अनन्यभोगत्वम्, संश्लेषे प्राणधारणं, विश्लेषे प्राणधारणाभावः, तदेकनिर्वाह्यत्वम्, इत्येते षट् धर्माः उभयोस्समानाः। एताद‍ृशगुणषट्केन लक्ष्म्या सह शुद्धजीवस्य साम्यसत्त्वात् जीवस्य दिव्यमहिषीतादात्म्यं युज्यत इति भावः। एवं शठकोपसूरेः अन्येषाञ्च सूरीणामेताद‍ृशगुणषट्कसाम्येन नायिकातादात्म्यं तदनुगुणा वाचश्च युज्यन्त एवेति तात्पर्यम्। नहि सर्वत्र साम्यं सर्वधर्मपुरस्कारेण संभवति। अपि तु विवक्षितेन यत्किञ्चित्समानधर्मेण। यथा मुखं चन्द्र इवेत्यत्र केवलमाह्लादकत्वेन धर्मेण साम्यं, न त्वन्येन केनचिदपि वर्तुलत्वादिना। एवं एतेनैव गुणषट्केन साम्यं लक्ष्मीजीवात्मनोः संभवति। यतश्च भगवदभिमतत्व-तदनुकूलत्व-तत्स्वरूपनिरूपकत्वपुरुषकारत्वादयो धर्माः श्रिय एवासाधारणाः। तत्र—

(१) अनन्यार्हशेषत्वं नाम— शेषः = दासः; अन्यशेषत्वानर्होऽयं जीवः। भगवदेकशेषः इत्यर्थः। भगवद्व्यतिरिक्तस्यान्यस्य वा स्वस्य वा शेषः अयं न भवतीति भावः। 'आत्मदास्यं हरेः स्वाम्यं स्वभावं च सदा स्मर'

'दासभूता स्वतस्सर्वे ह्यात्मान परमात्मन । नान्यथा लक्षणं तेषा बन्धे मोक्षे तथैव च ' 'अनन्या राघवेणाहम्' इत्यादिवचनात् ।

(२) **अनन्यशरणत्वं नाम**— शरणम्=उपाय । 'सम्प्रत्युपायार्थैकवाचक ' इति मन्त्ररत्ने शरणशब्दस्योपायवाचकत्वात् । आत्मान सिद्धोपायभूतभगवदेकोपायका । तदन्यभक्तिज्ञानादीना अनुपायत्वात् । अतोऽनन्यशरणा । अनन्यशरणत्वञ्च—' शरैस्तु सङ्कुला कृत्वा लङ्का परबलार्दन । मां नयेद्यदि काकुत्स्थ तत्तस्य सदृश भवेत् ' इति उपायाध्यवसायरूपम् ।

(३) **अनन्यभोगत्वञ्च**—भगवदेकभोग्यवत्त्वमित्यर्थ । 'नैषा पश्यति राक्षस्यो नेमान् पुष्पफलद्रुमान् । एकस्थहृदया नूनं राममेवानुपश्यति ॥ ' 'त पद्मदलपत्राक्षं सिंहविक्रान्तगामिनम् । धन्या पश्यन्ति मे नाथ कृतज्ञं प्रियवादिनम् ॥ ' इत्यादि प्रमाणै तदेकभोगत्वं सिद्धम् ।

(४) **सश्लेषे प्राणधारणं**—भगवत अनुभवरूपसंश्लेषसत्वे जीवधारण यथा —'यस्त्वया सह स स्वर्गो निरयो यस्त्वया विना । ' इति तत्सश्लेषैकधारणस्वभावत्वम् ।

(५) **विश्लेषे प्राणधारणाभावः**—भगवत अनुभवाभावरूपविश्लेषे सति प्राणधारणाभाव । यथा — ' न च सीता त्वया हीना न चाहमपि राघव । मुहूर्तमपि जीवावो जलान्मत्स्याविवोद्धृतौ ॥ ' इति तद्विश्लेषे धारणाभावश्च ।

(६) **तदेकनिर्वाह्यत्वं** — भगवदेकनिर्वाह्यत्वम् । भगवदधीनस्वरूपस्थितिप्रवृत्तिनिवृत्त्यादिमत्त्वम् । अचेतनवत्पारतन्त्र्यमिति भाव ।

' न स्वल्पवैव सौमित्रे जीवित जाह्नवीजले ।
त्यजेय राघव वंशे भर्तुर्मा परिहास्यति ॥ '

इति भगवदेकपारतन्त्र्यम् ।

## (इ) वेदत्वात् (पृ. ९७) इत्यस्य विवरणम्

चरमश्लोकटिप्पणीव्याख्यायां कठिनपददीपिकायां (पृ. २४४) संस्कृतद्राविडवेदोभयसाधारणं वेदलक्षणमुक्तम्। यथा — "द्राविडवेदसाधारणं वेदलक्षणमुक्तं चरमश्लोकचन्द्रिकायां तृतीयकलायाम्। वेदत्वं शब्दतदुपजीवि-प्रमाणेतरप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति, शब्दजन्यवाक्यार्थज्ञानाजन्य-प्रमाणशब्दत्वम्" इति।

द्राविडवेदानामुपबृंहणरूपत्वेऽपि वेदत्वं न हीयत इति तत्रैवोक्तम्। यथा — "द्राविडवेदानां वेदोपबृंहणत्वं वेदत्वाविरोधीत्युक्तं तत्कलायामेव— न च वेदत्वतदुपबृंहणत्वयोर्विरोधः। वेदत्वाविशेषेऽपि मन्त्रब्राह्मणानां विवरण-विवरणिभावस्य बहुशो दरीदृश्यमानत्वेन अपौरुषेयत्वेन वेदत्वस्य उक्तार्थ-विशदीकारयुक्तार्थान्तरबोधनेन वेदविवरणत्वस्य च मूलमन्त्रमन्त्ररत्नन्यायेन सम्भवात्। अतः श्रुतिस्मृतीतिहासपुराणश्रीपाञ्चरात्रवैखानससदाचार्यश्रीसूक्तिभिः श्रीपराङ्कुशमुन्यादिदिव्यप्रबन्धानां द्राविडवेदत्वं संप्रतिपन्नमिति ज्ञेयम्"। इति च।

इति अनुबन्धः प्रथमः

# अनुबन्धः द्वितीयः

## दिव्यसूरीणामवतारकालस्थलादि विवरणम्

### १. सरोमुनिः — पोय्गैयाळ्वार्

१) अवतारकालः —

द्वापरे ८६२९०१ तमः वत्सरः । (B.C. 4201) सिद्धार्थि— तुला, श्रवणनक्षत्रम् ।

२) अवतारस्थलम् —

काञ्चीपुरम् (चेङ्गलपट् जिला)

३) ग्रन्थनाम पद्यसंख्या च —

मुदल्तिरुवन्दादि — १००.

४) सङ्कीर्तितदिव्यदेशनामानि (६)—

श्रीरङ्गम्, तिरुवे॑ंहा, तिरुवेङ्कडम्, तिरुक्कोवलूर्, तिरुप्पार्कडल्, परमपदम् ।

### २. भूतमुनिः — पूदत्ताळ्वार्

१) अवतारकालः —

द्वापरे ८६२९०१ तमः वत्सरः (B C. 4201) सिद्धार्थि — तुला, धनिष्ठा ।

२) अवतारस्थलम् —

महाबलिपुरम् (तिरुक्कडल्मल्लै) ।

३) ग्रन्थनाम पद्यसख्या च —

इरण्डा तिरुवन्दादि—१००

४) सङ्कीर्तितदिव्यदेशनामानि (१३)—

श्रीरङ्गम्, तञ्जमामणिक्कोयिल्, तिरुक्कुडन्दै, तिरुमालिरुंशोलै,

तिरुक्कोट्टियूर्, तिरुच्चणगाल्, तिरुक्कोवलूर्, काञ्ची, पाडहम्, तिरुनीर्मलै, तिरुक्कडल्मलै, तिरुवेहडम्, तिरुप्पार्कडल् ।

## ३. महदाह्वयः—पेयाऴ्वार्

१) अवतारकालः —
द्वापरे ८६२९०१ तमो वत्सरः । (B.C. 4201) सिद्धार्थि— तुला, शततारा ।

२) अवतारस्थलम् —
मैलापूर् (मयूरपुरी, मद्रास् सिटि)

३) ग्रन्थनाम पद्यसंख्या च —
मूत्रां तिरुवन्दादि — १००

४) सङ्कीर्तितदिव्यदेशनामानि (१४)—
श्रीरङ्गम्, तिरुक्कुडन्दै, तिरुविण्णहर्, तिरुक्कोट्टियूर्, काञ्ची, तिरुवेळुक्कै, पाडहम्, ऊरहम्, तिरुवे∴हा, तिरुवल्लिक्केणि, घटिकाचलम्, तिरुवेङ्कडम्, तिरुप्पार्कडल्, (तिरुनाडु) परमपदम् ।

## ४. भक्तिसारमुनिः — तिरुमळिशैप्पिरान्

१) अवतारकालः —
द्वापरे ८६२९०१ तमः वत्सरः (B.C. 4201) सिद्धार्थि — मकर, मखा ।

२) अवतारस्थलम् —
तिरुमळिशै (महीसारक्षेत्रम्, (चेंगल्पट् जिला)

३) ग्रन्थनाम पद्यसंख्या च —
१) नान्मुहन् तिरुवन्दादि — ९६
२) तिरुच्चन्दविरुत्तम् — १२०

४) सङ्कीर्तितदिव्यदेशनामानि (१६)—

श्रीरङ्गम् , अन्बिल् , तिरुप्पेर्नहर्, तिरुक्कुडन्दै, तिरुक्कोट्टियूर्, तिरुक्कुरुंकुडि, पाडहम् , ऊरहम , तिरुवे.:.हा, तिरुवेव्वळूर्, तिरुवल्लिकेणि, तिरुवेंगडम् , द्वारका, तिरुप्पार्कडल् , तिरुनाडु (परमपदम् ), तिरुनारायणपुरम् ।

## ५. मधुरकविसूरिः — मधुरकवियाळ्वार्

१) अवतारकालः—

द्वापरे ८७३७७९ तमोवत्सरः (B.C. 3223) ईश्वर, मेष, चित्रा

२) अवतारस्थलम्—

तिरुक्कोळूर् (तिन्नवेल्लि जिल्ला)

३) ग्रन्थनाम पद्यसंख्या च—

कण्णिनुण् शिरुत्ताम्बु—११

## ६. शठकोपसूरिः — नम्माळ्वार्

१) अवतारकालः—

कलियुगे ४३ तमो दिवसः । (B.C 3102) बहुधान्य — वृषभ, विशाखा ।

२) अवतारस्थलम्—

आळ्वार् तिरुनहरि (तिन्नवेल्लि जिल्ला)

३) ग्रन्थनाम पद्यसंख्या च—

१) निरविरुत्तम् — १००
२) तिरुवाशिरियम् — ७
३) पेरियतिरुवन्दादि — ८७
४) तिरुवाय्मोळि — ११०२

४) सङ्कीर्तितदिव्यदेशनामानि (३९)—

श्रीरङ्गम्, तिरुप्पेर्नहर्, तिरुक्कुडन्दै, तिरुविण्णहर्, तिरुक्कण्णपुरम्, तिरुमालिरुंशोलै, तिरुमोहूर्, तिरुक्कुरुङ्गूर्, तोलैविल्लिमङ्गलम्, वानमामलै, तेन्तिरुप्पेर्, श्रीवैकुण्ठम्, तिरुप्पुळिङ्गुडि, वरगुणमङ्गै, पेरुङ्गुळम, तिरुक्कुरुङ्गुडि, तिरुक्कोळूरु, तिरुवनन्तपुरम्, तिरुवण्परिशारम्, तिरुक्काट्करै, तिरुमूळिकळम्, तिरुप्पुलियूर्, तिरुच्चेङ्गन्नूर्, तिरुनावाय्, तिरुवल्लवाळ्, तिरुवण्वण्डूर्, तिरुवाट्टार्, तिरुक्कडित्तानम्, तिरुवारन् विळै, पाडहम्, ऊरहम्, तिरुवे·ंहा, तिरुवेङ्कडम्, तिरुवयोध्या, द्वारका, वडमधुरै, तिरुप्पार्कडल्, तिरुनाड् (परमपदम्), तिरुनारायणपुरम्।

७. कुलशेखरसूरिः—कुलशेखराळ्वार्

१) अवतारकालः —

कलियुगे २८ तमो वत्सरः (B.C. 3076) पराभव — कुम्भ, पुनर्वसू।

२) अवतारस्थलम्—

तिरुवञ्जिक्कळम् (मलबार्)

३) ग्रन्थनाम पद्यसंख्या च —

१) पेरुमाळ्तिरुमोळि—१०५

२) मुकुन्दमाला (संस्कृतम्) — ४० पद्यानि

४) सङ्कीर्तितदिव्यदेशनामानि (१०)—

श्रीरङ्गम्, तिरुक्कण्णपुरम्, तिरुवालितिरुनहरि, चिदम्बरम्, तिरुवित्तुवक्कोड्, तिरुवेङ्कडम्, तिरुवयोध्या, वडमधुरै, तिरुप्पार्कडल्, परमपदम्।

## ८. विष्णुचित्तसूरिः— पेरियाळ्वार्

१) अवतारकालः —

कलियुगे ४७ तमो वत्सरः (B C 3057) क्रोधन — मिथुन, स्वाती ।

२) अवतारस्थलम्—

श्रीविल्लिपुत्तूर् (तिरुनेल्वेलि जिल्ला)

३) ग्रन्थनाम पद्यसंख्या च—

१) तिरुप्पल्लाण्डु—१२

२) पेरियाळ्वार् तिरुमोळि—४६१

४) सङ्कीर्तितदिव्यदेशनामानि (१९)—

श्रीरङ्गम्, तिरुनेल्ळरै, तिरुप्पेर्नहर्, तिरुक्कुडन्दै, तिरुकण्णपुरम्, तिरुमालिरुंशोलै, तिरुक्कोट्टियूर्, श्रीविल्लिपुत्तूर्, तिरुक्कुरुङ्गुडि, तिरुवेङ्कडम्, तिरुवयोध्या, सालग्रामम्, बदरिकाश्रमम्, कण्डमेन्नुं कडिनहर्, द्वारका, वडमधुरै, तिरुप्पार्कडल्, परमपदम्, तिरुनारायणपुरम् ।

## ९. गोदादेवी — आण्डाळ्

१) अवतारकालः —

कलियुगे ९८ तमो वत्सरः (B.C. 3006) नळ — कर्काटक पूर्वफल्गुनी ।

२) अवतारस्थलम् —

श्रीविल्लिपुत्तूर् (तिरुनेल्लि जिल्ला)

३) ग्रन्थनाम पद्यसंख्या च—

१) तिरुप्पावै— ३०

२) नाच्चियार् तिरुमोळि—१४३

४) सङ्कीर्तितदिव्यदेशनामानि (१२)—
श्रीरङ्गम्, तिरुक्कुडन्दै, तिरुकण्णपुरम्, तिरुमालिरुंशोलै, श्रीविल्लिपुत्तूर्, तिरुवेङ्कडम्, द्वारका, वडमधुरै, तिरुवाय्पाडि, तिरुप्पार्कडल्, परमपदम्, तिरुनारायणपुरम् ।

## १०. भक्तांघ्रिरेणुसूरिः—तोण्डरडिप्पोडियाळ्वार्

१) अवतारकालः—
कलियुगे २८९ तमो वत्सरः (B.C 2815) प्रभैव — धनुः ज्येष्ठा ।

२) अवतारस्थलम्—
मण्डङ्गुडि (तिरुच्चि जिल्ला)

३) ग्रन्थनाम पद्यसंख्या च—
१) तिरुप्पळ्ळियेळुच्चि — १०
२) तिरुमालै — ४५

४) सङ्कीर्तितदिव्यदेशनामानि (५)—
श्रीरङ्गम, तिरुवयोध्यै, वडमधुरै, तिरुप्पार्कडल्, परमपदम् ।

## ११. पाणसूरिः — तिरुप्पाणाळ्वार्

१) अवतारकालः —
कलियुगे ३४३ तमो वत्सरः (B.C. 2761) दुर्मति — वृश्चिक, रोहिणी ।

२) अवतारस्थलम्—
उरैयूर् (तिरुच्चि जिल्ला)

३) ग्रन्थनाम पद्यसंख्या च—
अमलनादिपिरान्—१०

४) सङ्कीर्तितदिव्यदेशनामानि (३) —

श्रीरङ्गम्, तिरुवेंगडम्, परमपदम्।

## १२. परकालसूरिः — तिरुमङ्गैयाळ्वार्

१) अवतारकालः —

कलियुगे ३९८ तमो वत्सरः (B C. 2706) नल — वृश्चिक, कृत्तिका।

२) अवतारस्थलम् —

तिरुक्कुरैयलूर् (तञ्जावूर् जिल्ला)

३) ग्रन्थनाम पद्यसंख्या च —

१) पेरियतिरुमोऴि — १०८४
२) तिरुक्कुरुन्दाण्डहम् — २०
३) तिरुनेडुन्दाण्डहम् — ३०
४) तिरुवेऴुकूत्तिरुक्कै — १
५) शिरियतिरुमडल् — ७८
६) पेरियतिरुमडल् — १४८

४) सङ्कीर्तितदिव्यदेशनामानि (८७) —

श्रीरङ्गम्, उरैयूर्, तञ्जमामणिक्कोयिल्, तिरुक्करम्बनूर्, तिरुवेळ्ळरै, तिरुप्पुळ्ळंपूदंगुडि, तिरुप्पेर्नहर्, तिरुआदनूर्, तिरुवऴुन्दूर्, शिरुपुलियूर्, तिरुच्चेरै, तलैचङ्गाडु, तिरुक्कुडन्दै, तिरुक्कण्डियूर्, तिरुविण्णहर्, तिरुक्कण्णपुरम्, तिरुवालितिरुनहरि, तिरुनाहै, तिरुनरैयूर्, नन्दिपुरविण्णहरम्, इन्दळूर्, चिदम्बरम्, शीर्हाऴि, गूडलूर्, तिरुक्कण्णङ्गुडि, कण्णमङ्गै, तिरुवेळ्ळियङ्गुडि, मणिमाडक्कोयिल्, वैकुण्ठविण्णहरम्, अरिमेयविण्णहरम्, तिरुत्तेवनार्तोहै, वण्पुरुषोत्तमम्, शेम्पोन्शेय्कोयिल्,

तिरुच्चेत्तियम्बलम्, तिरुमणिक्कूडम्, कावळंबाडि, तिरुवेळ्ळक्कुळम्, पार्त्तन्पळ्ळि, तिरुमालिरुंशोलै, तिरुक्कोट्टियूर्, तिरुमेय्यम्, तिरुप्पुल्लाणि, तिरुत्तण्गाल्, तिरुमोहूर्, तिरुक्कूडल्, तिरुक्कुरुंकुडि, तिरुमूळिक्कळम्, तिरुप्पुलियूर्, तिरुनावाय्, तिरुवल्लवाळ्, तिरुवहीन्द्रपुरम्, तिरुक्कोवलूर, काञ्ची, अष्टभुजम्, तिरुत्तण्का, तिरुवेळुक्कै, पाडहम्, नीरहम्, निलाचिङ्गळ्तुण्डम्, ऊरहम्, तिरुवे∴हा, कारहम्, कार्वानम्, कळ्वनूर्, पवळवण्णम्, परमेश्वरविण्णहरम, तिरुप्पुळ्कुळि, तिरुनिन्रवूर्, तिरुवळ्ळूर्, तिरुनीर्मलै, तिरुविडवेन्दै, तिरुक्कडल्मलै, तिरुवलिक्केणि, घटिकाचलम्, तिरुवेङ्कडम्, अहोबिलम्, तिरुवयोध्या, नैमिशारण्यम्, सालग्रामम्, बदरिकाश्रमम्, पिरिदि, द्वारका, वडमधुरै, गोकुलम्, तिरुप्पार्कडल्, तिरुनाड् (परमपदम्), तिरुनारायणपुरम्।

## १३. काञ्चीपूर्णः— तिरुक्कच्चिनम्बि

१) अवतारकालः —

कलियुगे ४०६८ (क्रिस्ताब्द १००३)। शोभकृत् — कुम्भ, मृगशिरा।

२) अवतारस्थलम्—

पूविरुन्दमल्लि (मद्रास् सिटि)

३) ग्रन्थनाम पद्यसंख्या च —

१) देवराजाष्टकम्

२) द्राविडरहस्यानि

## १४. कूरनाथः — कूरत्ताळ्वार्

१) अवतारकालः—

कलियुगे ४०६२ (क्रि. श. १००९) सौम्य—मकर, हस्ता ।

२) अवतारस्थलम्—

कूरम् (चेंगल्पट् जिल्ला)

३) ग्रन्थनाम पद्यसंख्या च—

१) पञ्चस्तवाः

२) यमकरत्नाकरः सव्याख्यः (यमकमहाकाव्यम्)

३) गद्यत्रयव्याख्या

४) मुक्तकश्लोकाः

इति अनुबन्धः द्वितीयः

# अनुबन्धः तृतीयः

## PURĀNIC AND OTHER REFERENCES TO ĀLWARS AND THEIR WORKS

### दिव्यसूरीणां (आळ्वार्) अवतारविषये द्राविडप्रबन्धानाम् आम्नायत्वे च प्रमाणभूतानि पुराणस्मृतिपाञ्चरात्रसंहिताश्रुतिवचनानि

---

पुराणवचनानि—

१. अधीतद्राविडाम्नायां स्त्रियं ब्रह्मविदं नरम् ।
आरोप्य देवैर्निर्णीतं तुलायामधिका वधूः ॥
इत्यनेकैश्च मुनिभिर्घुष्यते सकलस्मृतौ ।
तस्मादध्ययनं कार्यं द्राविडाम्नायसन्ततेः ॥ .... इत्यादि ।

—ब्रह्माण्डपुराणे सनत्कुमारदिलीपसंवादे

२. अनन्तगरुडादीनां सूरीणां नित्ययोगिनाम् ।
अंशोद्भूता महाभागा जायन्तीह ममाज्ञया ॥
कासारो भूतयोगी च महदाख्यः कृते युगे ।
विष्णुचित्तो भक्तिसारस्त्रेतायां कुलशेखरः ॥
भक्ताङ्घ्रिरेणुर्द्वापारे मुनिवाहः परान्तकः ।
पराङ्कुशः कलौ मिश्रे कलौ रामानुजो मुनिः ॥ ....
कावेरीमध्यमुत्स्वस्थं रङ्गिणं शेषतल्पगम् ।
तोताद्रीशञ्च मद्भक्तास्सेवन्ते द्राविडेषु वै ॥
वैस्समुद्गीयमानां तां द्राविडब्रह्मसहिताम् ।

वृत्तगद्यात्मिकां रम्यां चतुर्वेदमयीं शुभाम् ॥
मत्सन्निधौ प्रतिदिनं पठन्ति प्रतिवत्सरम् ॥ .... इति ।
— ब्रह्मकैवर्ते एकोनत्रिंशेऽध्याये, अगस्त्यं प्रति श्रीनिवासः

३. स्वशाखाध्ययनं कृत्वा वैष्णवो द्राविडश्रुतिम् ।
अनधीत्य श्रमं शास्त्रे यः करोति स दुर्मतिः ॥ इति ।
— आदित्यपुराणे

४. दत्तात्रेयः कृतयुगे त्रेतायां रघुनन्दनः ।
द्वापरे वासुदेवः स्यात् कलौ देवः पराङ्कुशः ॥
— ब्रह्माण्डपुराणे

५. कारिपुत्रो महायोगी जातः सेनेश्वरो मम ।
लोकसंरक्षणार्थाय नैषो मानुषविग्रहः ॥
— भार्गवपुराणे

६. पितुर्मृताहात्पूर्वेद्युः रात्रावध्ययनं द्विजैः ।
कार्यं द्रमिडवेदस्य पितुस्तृप्तिर्न चान्यथा ॥
—आदित्यपुराणे

७. वृद्धावादौ क्षये चान्ते द्राविडब्रह्मसंहिता ।
अध्येतव्या द्विजवरैराद्यं गीतिसहस्रकम् ॥
शुभादौ द्विजवर्यैश्च सर्वसंपच्छुभावहम् ।
सहस्रशाखाध्ययनं कारयेद्वै द्विजोत्तमः ॥
अशुभान्ते विशेषेण द्राविडब्रह्मसहिता ।
अध्येतव्या द्विजवरैराशौचाघविनाशिनी ॥
— ब्रह्माण्डपुराणे, वृद्धवासिष्ठे च

८. कृपया तत्प्रणीतान्तु ब्रह्मविद्यां महत्तराम् ।
अध्येष्यन्ति द्विजा भूपा वैश्याश्शूद्राश्च सर्वशः ॥

एषा च वेदगाथावन्नित्या द्राविडसंहिता । ......
संस्कृतश्रुतयो यद्वत् द्राविडश्रुतयस्तथा ॥
—मार्कण्डेयपुराणे मध्यमभागभूतभगवद्धर्मे पञ्चाध्याये
सनत्कुमारं प्रति सेनेशः ।

९. कलिस्साधुरिति प्रोक्तो वेदव्यासेन धीमता ।
कृतादिषु प्रजा राजन् कलाविच्छन्ति संभवम् ॥
कलौ खलु भविष्यन्ति नारायणपरायणाः ।
ताम्रपर्णी प्रतीची च कृतमाला पयस्विनी ॥
कावेरी च महानद्यस्तासां तीरेषु योगिनः ।
भविष्यन्ति कलेः काले द्रामिड्या भाषया स्वयम् ॥
वेदार्थविशदीकारं करिष्यन्तीति शुश्रुमः ।
महाभागवता लोके द्रमिडेषु च भूरिशः ॥
परमैकान्तिनो विष्णोः पार्षदाः कृतदेहिनः ।
भविष्यन्ति कलौ प्राप्ते इति व्याससुतोऽब्रवीत् ॥
— भारते हरिवंशे दक्षिणद्वारकामाहात्म्ये एकोनषष्टितमे
अध्याये गोमिलं प्रति नारदः ।

१०. कलौ खलु भविष्यन्ति नारायणपरायणाः ।
क्वचित्क्वचिन्महाराज द्रविडेषु च भूरिशः ॥
ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी ।
कावेरी च महापुण्या प्रतीची च महानदी ॥
ये पिबन्ति जलं तासां मनुजा मनुजेश्वर ।
प्रायो भक्ता भविष्यन्ति वासुदेवपरायणाः ॥

न प्रीतिरस्ति मम वक्षसि लालितायां
लक्ष्म्यां तथा सकलभूतनिदानसीम्नि ।
मज्जन्मकर्मगुणबन्धयुतान्प्रबन्धान्
सङ्कीर्तयत्यनघभक्तजने यथैव ॥
—श्रीभागवते

स्मृतिसंहितादिवचनानि—

१. प्राप्यस्य ब्रह्मणो रूपं प्राप्तुश्च प्रत्यगात्मनः ।
प्राप्त्युपायं फलं प्राप्तेस्तथा प्राप्तिविरोधि च ॥
वदन्ति सकला वेदास्सेतिहासपुराणकाः ।
मुनयश्च महात्मानो वेदवेदार्थवेदिनः ॥
—वृद्धहारीतस्मृतौ, पाञ्चरात्रे हारीतसंहितायाञ्च

२. यथा वेदस्तु नित्यस्स्यात्तथा नित्या श्रुतिस्त्वियम् ।
इति वेदान्तसारज्ञैर्निर्णीता द्राविडश्रुतिः ॥
गीर्वाणमयवेदस्य तैष्यश्रावणपर्वणोः ।
यथा प्रोक्तौ महाप्राज्ञ समुत्सर्जनसंग्रहौ ॥
द्राविडाम्नायवृन्दस्य कौमुदीमार्गशीर्षयोः ।
पर्वमद्दिनयोरेव समुत्सर्जनसंग्रहौ ॥
अध्येतव्या द्विजाद्यैस्तु वैष्णवैर्द्रमिडश्रुतिः ।
स्त्रीशूद्रसङ्कराद्यैश्च नित्यं भक्तिसमन्वितैः ।
द्विजेभ्यस्संगृहीतव्या द्राविडाम्नायसन्ततिः ॥
— श्रीपाञ्चरात्रे वासुदेवसंहितायां, प्रमाणसंग्रहे च

३. स्वशाखाद्राविडाम्नायौ विच्छिद्येते त्रिपूरुषम् ।
स्रवति स यतस्तस्मात् ब्राह्मणत्वमिति श्रुतिः ॥

द्राविडाम्नायसहिताध्येतव्या वैष्णवैः श्रुतिः ।
निष्फला तेन रहिता सात्वप्रणवमन्त्रवत् ॥
—श्रीपाञ्चरात्रे अनिरुद्धसंहितायाम्

४. ब्राह्मणः क्षत्रियो वैश्यश्शूद्रो वान्योऽथ सङ्करः ।
अधीतद्राविडाम्नायः पूज्यो नित्यं मुमुक्षुभिः ॥
— पारमेश्वरसंहितायाम्

५. तथा मधुरकव्यादेः पञ्चसंस्कारदो गुरुः ।
तस्मै द्रविडवेदान्तचतुर्णामुपदेशकृत् ॥ इत्यादि ।
— श्रीपाञ्चरात्रे वासुदेवसंहितायाम्

६. भूम्यां कृतावतारोऽहं सर्वानेतान् जनान् दृढम् ।
प्रापयिष्यामि वैकुण्ठं नात्र कार्या विचारणा ॥
एवं कृतप्रतिज्ञोऽथ कुरुकानगरे भुवि ।
शठकोप इति ख्यातो जज्ञे कारिसुतो महान् ॥ इति ।
—विष्वक्सेनसंहितायाम्

७. ऋगादीन् देवयात्रायां दक्षिणादिषु वै क्रमात् ।
पठेद्देवस्य परतः स्तुतीरन्याश्च मानुषीः ॥
पुरतो देवयात्रायां द्राविडश्रुतिलक्षणाः ।
आपद्मपाणयो हर्षात्पठेयुः परमास्स्तुतीः ॥
— श्रीपाञ्चरात्रे वासुदेवसंहितायाम्

८. ततस्ते सन्निधौ विष्णोर्गायेरन् वैष्णवोत्तमैः ।
वैष्णवी विविधा गाथा उपदिष्टाः स्वदेशिकैः ॥
नान्यगाथास्तदा गेयाः स्वाचार्योदीरितं विना । ....
नान्यव्रतानि कुर्वीत दीक्षायाश्च समन्वितः ॥

गेयः प्रातश्च सङ्गम्य गायेरन् द्रामिडश्रुतीः ।
गेये समापिते तेषां पादतीर्थं समाहरेत् ॥ ...
समाप्य गेयं ते सर्वे मङ्गलानि प्रचक्षते ।
ततस्तु ऋग्यजुस्सामाथर्वणैर्वेदपारगाः ॥
वेदपारायणं कुर्युः स्तुतिगीतां च तान् क्रमात् । ....
अनेनोक्तविधानेन कुर्याद्वै वैष्णवोत्सवम् ।
तद्ग्रामवासिनो मुक्तिं प्राप्नुवन्ति न संशयः ॥

— श्रीपाञ्चरात्रे शुकप्रश्ने नारायणसंहितायां तिरु-
वध्ययनोत्सवविधिनामके ४२ अध्याये

९. ममाराधनवेलायामुत्सवे च विशेषतः ।
जन्मर्क्षे श्राद्धकाले च द्रमिडीं नियतं पठेत् ॥
विना द्रमिडसूक्तेन कृतं तद्राक्षसं भवेत ।

— श्रीपाञ्चरात्रे

१०. मध्ये पदे तु ब्रह्माणं सरस्वत्या समन्वितम् ।
चतुर्दिक्षु चतुर्वेदानृगादीन् पूर्ववत्क्रमात् ॥
द्राविडं वेदमावाह्य तथैव कलशेष्वपि ।
मरीचिं काश्यपं चात्रिं भृगुमग्न्यादिकोणके ॥

— श्रीवैखानससंग्रहे द्वादशमासोत्सवविधौ मार्ग-
शीर्षमासोत्सवे वेदपारायणोत्सवविधि (अध्य-
यनोत्सव) नामक पञ्चदशाध्याये

११. तेषामप्यनुकम्पार्थं देवदेवो हरिस्स्वयम् ।
स्वभक्ताननुविश्यैव वेदार्थान् वक्तुमिच्छति ॥

यत्र मुक्ता नदी चैव क्षीरिका जलवेरका ।
तत्र तत्र हरेर्भक्ता भविष्यन्ति दशाधिकाः ॥
भाषान्तरमयैः पद्यैर्गाथाभिर्गेयमिश्रितैः ।
वेदार्थसारैर्गायन्तश्चरन्तश्च भुवं सदा ॥ ......
गायन्तं हरिभक्तानां सर्वदा त्राणकारिणी ।
गायत्री परमा शक्तिस्सर्वयोग्या भविष्यति ॥

—विष्णुयामळतन्त्रे गायत्रीकल्पे चतुर्दशाध्याये

ओङ्काराद्व्याहृतिर्भवति । व्याहृत्या गायत्री भवति । गायत्र्या सावित्री भवति । सावित्र्या सरस्वती भवति । सरस्वत्या द्राविडीर्ब्रह्मसंहिताश्चत्वारो वेदा भवन्ति । ते वै चत्वारो वेदाः नारायणांशभूतशठारिणा प्रकाश्यन्ते । षडङ्गानि कलिवैरिणा भ्राजमानानि । सेनेशभूतभट्टाद्यैः भ्राजमानाः चतुर्दशविद्याः । एते गायत्र्यात्मकाश्चतुर्विंशतिसंख्याकाश्चतुस्सहस्रगाथा द्राविडश्रुतयो वासुदेवविषयभूताः प्रवर्तन्ते । ........ यत्रेदमधीयीत न तत्रान्यदधीयीत । ........ द्राविडीवर्णास्ता वै द्राविडीभाषाः । शठजित्परकालाद्या द्वादश कर्तारः । पुनः शठारिणा भ्राजमानाः सर्वा द्राविडश्रुतयः । इहचेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः । ........ गीर्वाणश्रुतयोऽद्वयस्वरूपाः त्रिगुणात्मकाः त्रैवर्णाधिकारा मृद्घटवत् ; द्रामिडीश्रुतयः शुद्धसत्त्वमया भगवद्विषयीभूताः सर्वाधिकाराः सुवर्णवत् । तस्मात् द्रामिडीं श्रुत्वा ब्रह्मज्ञानं भवति । ...... द्रामिड्या न परं किञ्चित्सा काष्ठा सा परा गतिः ।........ तदेतदृचाभ्युक्तम् । क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः तेषामेवैतां द्राविडीं ब्रह्मविद्यां वदेत । यो वा एतां द्राविडीं वेद अपि हैनं सर्वाणि भूतानि सेवा यो वा एतामेवं वेद । इत्यादि ।

—याज्ञवल्क्यद्राविडब्रह्मोपनिषदि

इति अनुबन्धः तृतीयः

# लघुटिप्पणी

**अधिष्ठानावतारः**— देवताभिः स्वशक्तिमात्रेण जीवात्मरहितं शरीरमनुप्रविश्य मनुष्यलोके अवतरणम् ।

**अध्ययनोत्सवः** — १२० पुटे द्रष्टव्यम् ।

**अरन्ताङ्गियार्**— धर्मधर इति पुराणेषु प्रसिद्धः ।

**अर्चिरादिः**—संसारान्मुक्तस्य ब्रह्मज्ञानिनः कैवल्यपरमपदगमनमार्गः । तदभिमानिदेवताश्च आतिवाहिकाः त्रयोदश — अर्चिः, अहः, शुक्लपक्षः, उत्तरायणम्, अब्दः, मरुत्, अर्कः, इन्दुः, विद्युत्, वरुणः, इन्द्रः, धाता, अमानवः ।

**अर्थपञ्चकम्** — १०१ पुटे द्रष्टव्यम् ।

**अष्टविधा भक्तिः** — मद्भक्तजनवात्सल्यं पूजायां चानुमोदनम् । स्वयमभ्यर्चनं चैव मदर्थे दम्भवर्जनम् ॥ मत्कथाश्रवणे भक्तिः स्वरनेत्राङ्गविक्रिया । ममानुस्मरणं नित्यं यच्च मां नोपजीवति ॥ भक्तिरष्टविधाह्येषा ........ ॥

**अष्टाङ्गयोगः** — १) यमः = इन्द्रियजयः । २) नियमः = व्रतोपवासादिः । ३) आसनं = स्वस्तिकपद्मादिना बन्धेन उपवेशः । ४) प्राणायामः = उच्छ्वासनिश्वासयोः नियमनम् । ५) प्रत्याहारः = इन्द्रियाणां रूपरसादिविषयेभ्यः प्रतिनिवर्तनम् । ६) ध्यानं = तैलधारावदविच्छिन्नस्मृतिसन्ततिः । ७) धारणम् = मनसः भगवद्विग्रहेषु ध्यानेन स्थिरीकरणम् । ८) समाधिः = मनसः ध्येये आत्मनि एकीभूतवत् स्थिरीकरणम् ।

**आऴ्वार्** — देशभाषाशब्दोऽयम् । स्वामी इत्यर्थः । सूरिशब्दपर्यायश्च ।

∴ — विसर्गचिह्नमिदं तमिळ्भाषायां केवलहकाररूपेण उच्चारणीयम् । यथा — तिरुवे∴हा = तिरुवेह्हा ।

कुसुमावचायाय — 'अवतरावचायशब्दयोः दीर्घह्रस्वत्वव्यत्यासः' इति वामनकाव्यालङ्कारसूत्रवचनेन प्रयोगः साधुः ।

कृपन् — कृप = विलेखने धातुः तनादिः, भ्वादिस्तु कर्पन् ।

कृष्णतृष्णातत्त्वम् — कृष्ण एव अशन-वसन-शयन-भोग्यादिकं सर्वम् इति भक्तानामात्यन्तिको भावबन्धः, कृष्णविषयिणी महती लालसा, तदेव तत्त्वम् ।

कोटिभेदिनी — स्वस्मात् कोटिसंख्याधिकपरिमाणं लोहादिकमपि स्वांशमात्रयोगात् सुवर्णादिरूपेण परिणमयित्री ।

घटसर्पदीव्यम् — घटगतसर्पेण व्यवहारः, व्यवहारार्थकः दिवु धातुः । साक्षिरहितन्यायस्य निर्णयाय प्रवृत्तः अयं व्यवहारः धर्मशास्त्रेषु श्रूयते । बहुकालात् भूम्यन्तः पिहितघटस्थापितः घटेन सहोद्धृतः क्रूरसर्पः न्यायार्थिना स्वात्मानं प्रमाणीकृत्य हस्तेन गृह्यते इति ।

चतुर्दशविद्याः — ऋक्, यजुः, साम, अथर्वा इति वेदाः ; शिक्षा, कल्पः, व्याकरणं, निरुक्तं, छन्दः, ज्यौतिषम् इति वेदाङ्गानि; मीमांसा, न्यायः, धर्मः इति शास्त्राणि, पुराणं च इति ।

चतुर्विंशति तत्त्वानि — प्रकृतिः, महान्, अहङ्कारः, मनः, श्रोत्रं, त्वक्, चक्षु, जिह्वा, घ्राणः, वाक्, पाणी, पादौ, पायुः, उपस्थः, शब्दः, स्पर्शः, रूपं, रसः, गन्धः, आकाशः, वायुः, तेजः, आपः, पृथिवी ।

त्रिगुणम् — सत्त्वं, रजः, तमः इति प्रकृतेः गुणाः ।

दुराचारोऽपि इत्यादि पद्यं (६५ पुटे) सात्वतसंहितायां १६ परि. २३ श्लो.

**दूत्यम्** — दूतस्य भावः कर्म वा, यत्प्रत्ययान्तः शब्दः। दौत्यं तु ष्यञ् प्रत्ययान्तः।

**दिव्यदेशाः** — प्रकृतग्रन्थे उपाचाः, सम्प्रदायैकदृष्टाः, १०८ संख्याताः, ब्रह्माण्डपुराणे लक्ष्मीनारायणसंवादे उक्ताः, 'श्रीतत्त्वनिधि' ग्रन्थे अनूदिताश्च।

**द्वीपान्तरम्** — (७४ पुटे) अद्यतन इण्डोनेष्याद्वीपः।

**धर्मादिपीठम्** — धर्माधर्म-ज्ञानाज्ञान-वैराग्यावैराग्य+ऐश्वर्यानैश्वर्यरूप+अष्टपादं सिंहासनम्।

**नादाच** — (४६ पुटे) न अदात् च इति पदच्छेदः।

**पञ्चकालनित्यकर्माणि** — १) अभिगमनम्=भगवद्विषये मनसः अभिमुखीकरणम्। २) उपादानम् = भगवत्पूजोपकरणवस्तुसम्पादनम्। ३) इज्या=भगवत्पूजा। ४) स्वाध्यायः=वेदवेदान्तरहस्याध्ययनम्। ५) योगः = शरणागतिपूर्वकं भगवच्चिन्तनम्।

**पञ्चसंस्काराः** — तप्तचक्राङ्कनं, ऊर्ध्वपुण्ड्रधारणं, दासशब्देन नामकरणं, रहस्यमन्त्रोपदेशः, भगवत्पूजा च।

**पञ्चायुधानि**—सुदर्शनः = चक्रम्, पाञ्चजन्यः = शङ्खः, कौमोदकी = गदा, नन्दकः = खड्गः, शार्ङ्गं = धनुः इति।

**पञ्चोपनिषत्** — मनुष्यलोकादिषु पृथिवी-जल-तेजो-वायु+आकाशवत् वैकुण्ठलोके विद्यमानानि पञ्चमहाभूतानि। परमेष्ठी, पुमान्, विश्वः, निवृत्तिः, सर्वः इति।

**परभक्ति-परज्ञान-परमभक्तयः** — भक्तानां उत्तरोत्तरभक्त्यवस्थाविशेषाः।
दर्शनं परभक्तिः स्यात् परज्ञानं तु सङ्गमः।
पुनर्विश्लेषभीरुत्वं परमाभक्तिरुच्यते ॥ इति यामुनमुनेः कारिका।

**परमसाम्यम्** — जगत्कारणत्वं, लक्ष्मीपतित्वं, सर्वशेषित्वम् इत्यादिकं विना, पाप-जरा-मृत्यु-शोक-बुभुक्षा-पिपासारहितत्वं, सत्यकामत्व-सत्यसङ्कल्पत्वादिदिव्यगुणवत्त्वं, दिव्यशरीरवत्त्वं, नित्यत्वम् इत्यादि विषये परमात्मनः मुक्तचेतनानां च समानत्वम् ।

**पश्चिमगीतम्**— कैशिकनिषादस्वरविशिष्टः रागविशेषः ।

**पिङ्गला** — पिङ्गलाख्या वेश्या विटं अर्धरात्रपर्यन्तं प्रतीक्ष्यप्रतीक्ष्य कमप्यलब्ध्वा निराशाभूत् । ततः सुखं सुप्ता इति इतिहासः । 'निराशस्सुखी पिङ्गलावत्' इति पातञ्जलयोगसूत्रम् ।

**पुरुषार्थः** — जनैः अपेक्षणीयं चतुर्विधं प्रयोजनम् — धर्मः, अर्थः, कामः, मोक्षः इति ।

**भगवान्, परमपुरुषः, सर्वेश्वरः** इति विष्णोरेव नामानि ।

**भावनात्रयम्**— कर्मभावना, ब्रह्मभावना, उभयभावना च ।

**मुकुन्दमाला** — एतद्ग्रन्थगतं 'नास्थाधर्मे' इत्यादि पद्यम् अद्यतन 'वियेट्नाम्' देशे प्राक्तनकाम्भोजराष्ट्रे देवमन्दिरशिलाशासनेऽपि दृश्यते इति इतिहासज्ञाः । एतद्देशप्राचीनेतिहासः मैसूरुराज्यगतमिथिलासालग्रामनाम्नि ग्रामे कौण्डिन्यगोत्रिषु लभ्यते ।

**यदुशैलः**— मैसूरुराज्ये मण्ड्यजिल्लायां वर्तते ।

**यमकिङ्करसंवादः** — वैष्णवलक्षणबोधकः विष्णुपुराणभागः ।

**रसवादः** — पारदाख्यरसलोहम् अयस्ताम्रादिभिः संयोज्य रजतसुवर्णादिकृतकलोहोत्पादनं, तेन विमानयन्त्राद्युत्पादनं, चिरायुर्योगः, झटिति रोगादिनिवारणम् इत्यादि सिद्धिप्रतिपादकं शास्त्रम् ।

**रहस्यत्रयम्** — अष्टाक्षरः, द्वयमन्त्रः, चरमश्लोकः इति ।

राज ओडयर् — (५४ पुटे) अस्य विषयः इतिहासादुद्धृत्य अनुवादकैः अत्र निरूपितः ।

विशिष्टाद्वैतम् — विशिष्टाद्वैतशब्दार्थः पूर्विकैरुक्तः —

तत्त्वं जिज्ञासमानानां हेतुभिः सर्वतोमुखैः ।
तत्त्वमेको महायोगी हरिर्नारायणः प्रभुः ॥

इत्यादि वचनैः नारायण एव समस्तचिदचिच्छरीरको विशिष्टाद्वैतं तत्त्वम् । किमिदं विशिष्टाद्वैतं नाम ? उच्यते — द्वयोः भावः द्विता । पृथक्त्वनिवेशित्वात् संख्यायाः तद्वाचिना शब्देन तस्य लक्षणा । तथा च द्विताशब्देन भेद उच्यते । द्विताया इदं द्वैतम् । भिन्नमित्यर्थः । विशिष्टपदसमभिव्याहारात् विशिष्टप्रतियोगिकत्वं भेदस्य लभ्यते । तत्सजातीयत्वं च तादृशभेदवतः तत एव लभ्यते । न विद्यते द्वैतं यस्य तत् अद्वैतम् । स्वभिन्नस्वजातीयशून्यमित्यर्थः । विशिष्टं च तत् अद्वैतं च विशिष्टाद्वैतम् । साजात्यं च स्वसमभिव्याहृतपदार्थतावच्छेदकरूपेण । तच्च वैशिष्ट्यमेव । तच्च चिदचित् प्रतियोगिकं, प्रकरणात् । तथा च चिदचिद्विशिष्टं स्वभिन्नस्वसजातीयवस्तुशून्यं तत्त्वमित्यर्थः । — चरमश्लोकटिप्पणी पृ. ३७१

व्यापकमन्त्राः — विष्णुषडक्षराष्टाक्षरद्वादशाक्षरमन्त्राः ।

शेषशेषिभावः — १०३ पुटे द्रष्टव्यम् ।

सप्तपदी — विवाहसंस्कारे वरमनुसृत्य वध्वा परस्परस्नेहदार्ढ्याय सप्तवारं पादविन्यासः ।

सूरिः — ज्ञानी इति सामान्यार्थः । पुरुषसूक्ते सदा पश्यन्ति सूरयः इत्युक्तः निरन्तरपरब्रह्मसाक्षात्कारशाली इति विशेषार्थः ।

——ॐ——

# SANSKRIT INDEX

## (A) NAMES OF WORKS

(B) NAMES OF DEITIES *(in italics)*, ĀLVĀRS AND INDIVIDUALS

(C) NAMES OF RIVERS AND PONDS (*in italics*), TOWNS, ETC

# अर्थकोशः

अधिकारः—योग्यता ।

अनन्यगतित्वम्—नारायणादन्यत्साधनं साध्यं च नास्ति ममेति मतिः ।

अपुनरावृत्तिः—पुनस्संसाराभावः । अरम्—शीघ्रम् ।

अवयवव्युत्पत्तिः—यौगिकशक्त्या शब्दस्य अवयवार्थनिरूपणम् ।

आकिञ्चन्यम्—कर्मज्ञानादिसाधनान्तरराहित्यम् ।

आत्यन्तिकी मुक्तिः—प्रकृतिसम्बन्धात् मुक्तिः (परमपदप्राप्तिः) ।

ऊर्ध्वपुण्ड्रः—वैष्णवैः ललाटे धारणीयः श्वेतमृत्तिकादिकल्पिततिलकविशेषः ।

औत्तानपादिः—ध्रुवः (उत्तानपादसुतः) । औपवाह्यः—वाहनभूतः ।

कन्था—द्विगुणितं चतुर्गुणितं वा स्यूतं जीर्णवस्त्रम् ।

कापिशाचः—कुत्सितः पिशाचः ।

कुटीवाटी—कुटीरपंक्तिः । कूटस्थः—कुलपतिः ।

कृषिः—कृषीवलकार्यम् (प्रय ।

कैङ्कर्यम्—किङ्करत्वम् (गुरुदेवादीनां पूजोपचारपादसंवाहनादिसकलविधसेवा)

कैवल्यम् — संसारान्मुक्तानां ब्रह्माण्डाद्बहिः स्वात्मानुभवस्थानम् ।

क्षयः — बन्धुमरणाद्यनन्तरभावि अप्रत्यक्षं मालिन्यम् ।

गीतिसहस्रकम् — सहस्रगाथा (तिरुवाय्मोलिग्रन्थः) ।

घटीचेटी— गृहदासी ।

घुटिकाः — लघुगोळकाः (मालाः) ।

चरमोपायः, पञ्चमोपायः, आचार्यनिष्ठा — गुरुरेव गतिरिति गुर्वनुग्रहादेव निष्पन्नः दृढाध्यवसायः ।

जितकाशी — जयशीलः ।

तदीयाः— भगवदीयाः, भक्ताः ।

तदीयाराधनम्—भक्तानां सपूजोपचारं भोजनादिकरणम् ।

तपनीयम्— सुवर्णम् । त्रैवर्णिकाः—ब्राह्मणक्षत्रियवैश्याः ।

त्रैविद्याः—वेदत्रयविज्ञानिनः ।

दण्डः — त्रिदण्डः । दद्भिः — दन्तैः ।

दर्शनम्— १) नेत्रम् । २) अवलोकनम् । ३) तत्त्वशास्त्रम् ।

दाशरथिः— १) रामः २) मुदलियाण्डानाख्य आचार्यवर्यः ।

दासेयः — भृत्यः ।

दिव्यप्रबन्धाः — चतुसहस्रगाथाः, द्राविडवेदाः, द्रमिडसंहिता ।

दिव्यसूरयः — नित्यसूरीणां अंशावताराः पराङ्कुशादयः ।

नरः — अर्जुनः ।

नवनीतचोरः — कृष्णः ।

नित्यविभूतिः — परमात्मनः परमपदगतं सर्वं शाश्वतं ऐश्वर्यम् ।

नित्यसूरयः — नित्याः । कदापि संसारबन्धरहिता एव नित्यं परमपद-स्थिताः अनन्तगरुडविष्वक्सेनादयः ।

नियमनम्— आज्ञा ।

नैच्यम् — नीचत्वम् । भगवतो भागवतानां च अत्यन्तं परतन्त्रोऽस्मीति तात्विकं ज्ञानम् ।

पत्रोर्णम्—धौतं कौशेयवस्त्रम् ।

पयः पयोधिराजः — क्षीरसमुद्रः । परतत्त्वम्— श्रेष्ठं तत्त्वम् ।

परमपदम्— संसारान्मुक्तानां परब्रह्मसेवास्थानं वैकुण्ठनामकम् ।

परमाचार्यः — स्वाचार्यस्याचार्यः ।

परवासुदेवः— परमपदस्थितः दिव्यरूपः परमात्मा ।

परवैराग्यम् — श्रेष्ठं वैराग्यं, भगवदितरविषयवैराग्यम् ।

पराक्रान्तः — वीरः ।

पवित्रम् — त्रिदण्डाग्रस्थं वस्त्रखण्डम् ।
पारमैकान्त्यम्—१०३ पुटोक्तं साम्यपट्कादिलक्षणम् ।
प्रपत्तिः — शरणागतिः, मोक्षसाधनं परमात्मैव नान्यत्किञ्चिदपीति दृढाध्यवसाययुक्ता । सा च सिद्धोपायावरणरूपा ।
प्रपन्नः— शरणागतः ।
प्रसादः — गुरुदेवादिभिः भुक्तशेषं पत्रपुष्पफलान्नादिकम् ।
प्रारब्धम् — प्राचीनपुण्यपापेषु इहजन्मन्यनुभूयमानं कर्म ।
प्रीतिमात्रयात्राः — भक्तिभावैकजीवनाः ।
ब्राह्ममुहूर्तः — अर्धरात्रात्परं तृतीयघण्टातः सार्धैकघण्टाकालः ।
भक्तिः — उपासनम्, तैलधारावदविच्छिन्नस्मृतिसन्ततिरूपं ध्यानम् ।
भगवान् — १) विष्णुः । २) पूज्यः ।
भागवताः — भगवद्भक्ताः ।
मनोजवसः — इङ्गितज्ञः ।
मन्त्ररत्नम्— द्वयमन्त्रः ।
मरुद्वृधा — कावेरीनदी ।
मुक्ताः — संसारान्मुक्ताः परमपदगताः ।
मूलमन्त्रः — अष्टाक्षरः ।
योगरूढम्— यौगिकशक्त्या रूढिशक्त्या च उपपन्नं पदम् ।
राजिलः — जलसर्पः ।
रूढिशक्तिः — शब्दस्य यत्किञ्चिदर्थे लोकप्रयोगनियमिता शक्तिः ।
लीलाविभूतिः — ब्रह्माण्डान्तर्गतं सर्वं परमात्मनः लीलार्थमैश्वर्यम् ।
वासवः — मेघराजः, इन्द्रः ।
विजयसखः — अर्जुनमित्रं, कृष्णः ।
विजृम्भणम्— विस्तारः, अतिशयः, समृद्धिः ।

विशिखा — राजमार्गः ।
विष्वक्सेनः — १. विष्णुसेनापतिः; २. (१८ पुटे) विष्णुः ।
विहारः — बौद्धमन्दिरम् ।
वृद्धिः — पुत्रादिजननानन्तरभावि तद्बन्धूनामप्रत्यक्षं मालिन्यम् ।
वेदपुरुषः— वेद एव ।
वैकुण्ठः — १) ब्रह्माण्डादूर्ध्वस्थितो लोकः परमपदम् । २) तत्रस्थितं नगरम् । ३) विष्णुः । ४) ब्रह्माण्डान्तर्वर्ती विष्णुलोकः । ५) द्राविडदेशस्थमेकं दिव्यक्षेत्रम् ।
वैष्णवमर्यादा— वैष्णवानां शास्त्रीयोनियमः १४ पुटे द्रष्टव्यः ।
व्याजोपायः — कर्मयोग-ज्ञानयोग-भक्तियोगादिः ।
व्रयः — व्ययः ।
शरणम्— रक्षकः उपायश्च ।
शिष्टाः — निश्चितशास्त्रानुसारमाचरणशीलाः प्रामाणिकाः ।
शुद्धसत्त्वम् — प्राकृतत्रिगुणादतिरिक्तः शुद्धः सत्त्वगुणः ।
शेषवस्त्रम्— गुरुदेवादिभिः धृतदत्तं वस्त्रम् ।
शेषाशनः — विष्णुसेनापतिः ।
श्रीचूर्णपरिपालनम् — मृतसंस्कारेषु केवलं रक्तहरिद्राचूर्णस्य ललाटे रक्षार्थं धारणम् । श्रीवैष्णवैः अनुष्ठीयमानः धर्मः ।
सम्प्रदायः — निश्चितशास्त्रानुसारमाचरणक्रमः ।
सार्वज्ञम्— सार्वज्ञ्यम्, सर्वज्ञत्वम् ।
सिद्धोपायः—सिद्धधर्मः, परमात्मा एक एव ।
हार्दः — सकलजनहृदयस्थितः परमात्मा ।
हेतिराजः — विष्णुचक्रं सुदर्शनः ।

——✠——